एते त्रयोपि प्रत्येकं त्रिधा। तथाहि। धर्मास्तिकायस्य स्कंधः देशः प्रदेशः तथा अधर्मास्तिकायस्य त्रयः तथा आकाशास्तिकायस्य त्रयः। एवं नवभेदा अभूवन्। तत्र अस्तीनां प्रदेशानां कायः समूहः अस्तिकाय। तत्र स्कंध कीदृग्? उच्यते। चतुर्दशरज्ज्वात्मके लोके सकलोऽपि यो धर्मोऽस्तिकायः स सर्वोऽपि स्कंधः कथ्यते। तस्य धर्मास्तिकायस्य कियन्मात्रो भागो देश उच्यते। तस्य धर्मास्तिकायस्य निर्विभागो भागः प्रदेशः। एवं अधर्मास्तिकायाकाशास्तिकाययोरपि स्कंध—देश–प्रदेशा ज्ञेया। तथाद्धा कालः समयादिलक्षण. स च दशमो भेदः। तथा पुद्गलानां चत्वारो भेदा स्कंध—देश–प्रदेश—परमाणवश्च। तत्र द्व्यणुकादयः क्रमेण एकादिवृद्ध्या अनन्ताणुकावसानाः स्कंधाः। तेषां कियन्मात्रा भागा देशाः प्रोच्यंते। तेषां निर्विभागा भागाः पुनः प्रदेशा उच्यंते। परमाणवः पुनः परस्परमसंबद्धा अतीवसूक्ष्माः स्कंधादिकारणरूपा निर्विभागा एव ज्ञातव्याः। एवं अजीवाः चतुर्दशभेदा भवंति। अथैतेषां विशेषस्वरूपं प्ररूपयति ॥

**धम्माधम्मा पुग्गल, नह कालो पंच हुंति अजीवा।**
**चलणसहावो धम्मो, थिरसंठाणो अहम्मो य ॥ ॥९॥**

(प्रा० अ०) 'धम्मा०' गाथापूर्वार्द्धं सुगमम्। नवरं धर्मास्तिकायाद्या अजीवा एव जीवेन सह षड् द्रव्याणि। पुद्गलं विना चत्वारोऽमी अमूर्त्ता निष्क्रियाश्च, पुद्गलास्तु रूपिण। रूपं 'रूपस्पर्शादिसन्निवेशो मूर्तिरिति' वचनात्। तदेषामस्तीति रूपिण। तेषामेव रूपादिमत्वात्, रूपग्रहणं गन्धादीनामुपलक्षणं, तद्व्यतिरेकेण तस्यासम्भवात्। अनन्तानन्तपरमाणुप्रचयरूपा. स्कन्धा मांसचक्षुर्ग्राह्याः स्तम्भकुम्भादय., तदग्राह्या अचित्तमहास्कन्धादय.। धर्माधर्मौ चैकजीवप्रदेशप्रमितासङ्ख्येयप्रदेशौ लोकव्यापिनौ। आकाशमनन्तप्रदेशं लोकालोकव्यापि, पुद्गलाः पुनरनन्ता लोकवर्त्तिन एव। कालस्तु तत्त्वतो वर्तमानरूप एव। अतो न देशप्रदेशकल्पना। गाथापश्चार्द्धेन एषां लक्षणं ग्रन्थकार एव व्याचष्टे। 'चल०' गतिलक्षणो धर्मास्तिकायः, स्थिरसंस्थानं पदार्थानामवस्थानं यस्मादसौ अधर्मास्तिकाय.। अवस्थितिलक्षण इत्यर्थः। एतौ हि मनुष्यादिप्रयत्नादप्रयत्नाद्वा पदार्थानां लोके गतिस्थितिहेतू, अलोके त्वेतयोरभावात्सेन्द्रदेवप्रयत्नेनापि

गतिस्थिती न स्यातामित्यनयोः सामान्येनास्तित्वस्थापनं, विशेषस्तु गन्धहस्त्यादिभ्यो ज्ञेयः ॥

(वृ०) व्याख्या-धर्मास्तिकायः अधर्मास्तिकायः पुद्गलास्तिकाय आकाशास्तिकाय कालः पञ्च पञ्चसङ्ख्या मूलपदार्था अजीवा भवन्ति । गाथापूर्वार्द्धार्थः । धर्माधर्म्मयोः किं लक्षणमिति गाथोत्तरार्द्धेनाह-'चलणसहावो धम्मो, थिरसंठाणो अहम्मो य' व्याख्या-धर्म्मश्चलनस्वभावः गत्यवष्टम्भकत्वात्, तदभावादलोके पाकशासनप्रेरितमपि वज्रं केशाग्रमात्रमपि न पुरः प्रयाति । अधर्म्मश्च स्थिरसंस्थानो निश्चलस्वभावः स्थित्युपष्टम्भकत्वात्, यतः पर्वतादीनां स्थैर्यं स तत्स्वभाव इति गाथार्थः । आकाशास्तिकायस्वरूपमाह-

( सा० अ० ) धर्मास्तिकायः १ अधर्मास्तिकायः २ पुद्गलास्तिकायः ३ नभ आकाशास्तिकायः ४ कालः समयादिः ५ एतानि पञ्च द्रव्याण्यजीवाः प्रोच्यन्ते, षष्ठं जीवद्रव्यमेवं जिनशासने, षड् द्रव्याणि कथ्यन्ते ६ ॥ अथ क्रमेण धर्मास्तिकायादीनां लक्षणमाह चलणेत्यादि—चलनस्वभावो धर्मास्तिकायः, जीवानां पुद्गलानां च गमनं कुर्वतां यद् द्रव्यं साहाय्यं ददाति तद्धर्मास्तिकायः । यथा मत्स्यानां जलं तथा धर्मास्तिकाय इत्यर्थः । स्थिरसंस्थानः पुनरधर्मास्तिकायः, स्थिरसंस्थान इति किमुच्यते ? यद्द्रव्यं जीवपुद्गलानां स्थितिं कुर्वतां सान्निध्यं ददाति स अधर्मास्तिकाय इति भावः । एतौ धर्माधर्मास्तिकायौ यत्र वर्तेते स लोकाकाशश्चतुर्दशरज्जुप्रमाणः, ततः परस्त्वलोकाकाशः । एवं धर्माधर्मास्तिकाययोर्विशेषस्वरूपं प्ररूपितं । अथाकाशपुद्गलयोः स्वरूपमाह—

अवगाहो आगासं, पुग्गलजीवाण पुग्गला चउहा ।
खंधा देसपएसा, परमाणू चेव नायव्वा ॥ ९ ॥ १० ॥

( प्रा० अ० ) अवगाहोऽवकाशः, पुद्गलानां जीवानां च यत्र तदाकाशं, कालपुद्गलयोश्चात्र सुज्ञानत्वाल्लक्षणं नोक्तं, तच्चेदम्-शीततपवर्षादिनैयत्यहेतु कालः, वर्णगन्धरसस्पर्शशब्दान्धकारादिलक्षणाश्च पुद्गलाः । ते चतुर्द्धा, स्कन्धा देशाः प्रदेशाः परमाणवश्च ज्ञातव्याः । ननु स्कन्धभेदाः ? प्रागेवोक्ता, सत्यं, किन्तु न तत्र पुद्गलभेदत्वेनेति ॥

(वृ०)—'अवगाहो आगाशं', कोऽर्थः यत्र यत्र गच्छतो गमनं भवति, तत्र तत्राकाशः यथा कुड्यादौ कीलकप्रवेशः, 'पुग्गल'त्ति पूरणगलनधर्माणः पुद्गलाः, ते च पुद्गलजावानामर्था नित्या जीवाश्रितपुद्गलानां पुद्गलाः शरीरवाङ्मनःप्राणापानरूपाः सुखदुःखजीवितमरणोपग्रहाश्चतुर्द्धा ज्ञातव्याः। कथं ? स्कन्धदेशप्रदेशपरमाणुरूपा इति गाथार्थः॥ सम्प्रति अद्धास्वरूपमाह—

( सा० अ० ) अवगाहो-इति जीवपुद्गलानां अवकाशः जीवानां पुद्गलानां च यद् अवकाशं ददाति तत् आकाशं, तत् आकाशद्रव्यमिति भावः। पुद्गलाश्चतुर्विधाः स्कंध—देश—प्रदेश परमाणुभेदैर्ज्ञातव्याः। स्कंधादीनां स्वरूपं पूर्वमेवोक्तं ज्ञातव्यम् ॥७॥ अथ काल स्वरूपमाह ॥

[सद्दंधयार उज्जोय, पभाछायातवेइय।
वन्नगंधरसाफासा, पुग्गलाणं तु लक्खणं॥७॥]॥११॥

[ ( अ० ) शब्दान्धकारोद्योतप्रभाछायातपवर्णगन्धस्पर्शा एते पुद्गलपरिणामा पुद्गललक्षणं वेति भावः ॥ ]

समयावली मुहुत्ता, दीहा पक्खा य मासवरिसा य।
भणिओ पलिया सागर,उस्सप्पिणी सप्पिणीकालो॥७॥१२॥

( प्रा० अ० )—'सम०' समयः सर्वसूक्ष्मः कालः श्रुतोक्तपट्टशाटिकापाटनदृष्टान्ताज्ज्ञेयः, असङ्ख्यातैः समयैरेकावलिका, ताभिः २५६ आवलिकाभिः क्षुल्लकभवग्रहणं निगोदजीवाः पूरयन्ति। मुहूर्त्तो घटिकाद्वयरूपः, "एगा कोडी सत्तसट्ठिलक्खा, सत्तहत्तरीसहस्सा य। दो अ सया सोलहिआ, आवलियाणं मुहुत्तम्मि ॥ १ ॥" दिवसादयः प्रसिद्धाः। अथ द्विचत्वारिंशत्पुण्यभेदानाह—

(वृ०) समयः परमनिकृष्टः कालः, ततः कालान्तरं सूक्ष्मं नास्ति, निर्विभागत्वात्। असङ्ख्यातैःसमयैरावलिका, षट्पञ्चाशदधिकद्विशत्या आवलिकानामेकः क्षुल्लकभवः, षट्त्रिंशदधिकपञ्चशतपञ्चषष्टिसहस्रक्षुल्लकभवैरेकं मुहूर्त्तं घटिकाद्वयप्रमाणं, त्रिंशद्भिर्मुहूर्त्तैर्दिवसः, पञ्चदशभिर्दिवसैः पक्षः, द्वाभ्यां पक्षाभ्यां मासः, द्वादशभिर्मासैर्वर्षः, अनेन क्रमेण शीर्षप्रहेलिकांयावत् सङ्ख्यातः कालः, ततः परम-

सङ्ख्यातः कालः पल्योपमादिकः, तद्वक्तव्यता चैवं- आयामदीर्घो- इत्वेन योजनप्रमाणः कूपः क्रियते, ततः सोऽनुक्रमेण सप्तदिनजात- युगलिककेशनिर्विभागखण्डैः संनिचितं भ्रियते, ततो वर्षशतैर्वर्षशतै- रेकैकं केशाग्रमुद्ध्रियते। यावता सर्वथा शुषिरीभवति,एवमेकं पल्योपमं स्यात्, दशकोटाकोटिपल्योपमैरेकं सागरोपमं, दशकोटाकोटिसाग- रोपमैरेका उत्सर्प्पिणी, तावन्मात्रावसर्प्पिणी,एवं रूपः कालो भणितः तीर्थंकरैरिति एतदर्थप्ररूपिका बृहत्सङ्ग्रहणिगाथाश्चैताः—

"जं जोयण विच्छिन्नं, तं तिउणं परिरयण सविसेसं ।
तावइगं उव्विद्धं, पल्लं पलिओवमं नाम ॥ १ ॥
एगाहिय वेहिय तेहियाण, उक्कोसं सत्तरत्ताणं ।
सम्मत्तं संनिचियं, भरियं तं वालकोडीणं ॥ २ ॥
वाससए वाससए, इक्किक्के अवहियंमि सुहुमंमि ।
सुहुमं अद्धापलियं, हवति वासा असंखिज्जा ॥ ३ ॥
एएसिं पल्लाणं, कोडाकोडी हविज्ज दसगुणया ।
तं सागरोवमस्सवि, परिमाणं हवइ एगस्स ॥ ४ ॥
दस सागरोवमाणं, पुन्ना उ हुंति कोडाकोडिउ ।
उस्सप्पिणीइ माणं, तं चेवुस्सप्पिणीए वि ॥ ५ ॥"

इति गाथार्थः॥ अद्धास्वरूपमुक्तं, अथपुण्यतत्त्वस्य प्रकृतीर्गाथा- युगेनाह—

( सा० अ० ) समयावलीति—समयोऽत्यंतसूक्ष्मकालः । आव- लिका असंख्यातसमयप्रमाणा । निगोदजीवानां एकश्वासोच्छ्वासमध्ये सप्तदशवारान् यावन्मरण अष्टादशसंख्योत्पत्तिरपि भवति. तेषां आयुः (२५६) आवलिका मानं, मुहूर्त्त घटीद्वयप्रमाणं । दिवसोऽहोरात्ररूपः त्रिंशन्मुहूर्त्तप्रमाणः । पक्षः पंचदशाहोरात्ररूपः । मासः पक्षद्वयप्र- माणः । वर्षं द्वादशमासप्रमाणं । पल्योपमं कूपदृष्टांतेन प्रसिद्धम् सागरोपमं दशकोटाकोटीपल्योपमप्रमाणम् । उत्सर्पिणी दशकोटाको- टीसागरोपमप्रमाणा । उत्सर्पिणीप्रमाणैवावसर्पिणी । एवमर्वोऽपि कालः सूर्यगतिक्रियापरिच्छिन्नो ज्ञातव्यः । एवं अजीवतत्त्वस्य चतुर्दशभेदा प्रोक्ताः ॥ इत्यजीवतत्त्वम् ॥ अथ पुण्यतत्त्वं द्विचत्वारिंशद्भेदं विवृणोति ॥

[एगाकोडी सगसट्ठिलक्खा, सत्तहत्तरी सहस्सा य।
दोयसया सोलहिया, आवलिआ इगमुहुत्तंमि ॥६॥]॥१३॥

[(अ०) पूर्ववर्णितस्वरूपा आवलय एकमुहूर्ते एककोटी सप्तषष्टिर्लक्षाः सप्तसप्ततिः सहस्रा द्वेशते षोडशाधिके १६७७७२१६ इति संख्याकाः॥]

[तिन्निसहस्सा सत्तय सयाणि, तिहुत्तरं च उस्सासा।
एग(स)मुहुत्तो भणिओ, सव्वेहिं अणंतनाणीहिं॥७॥]॥१४॥

[(अ०) त्रयः सहस्राः सप्त च शतानि त्रिसप्तत्युत्तराणि च उच्छ्वासा इति सामान्यत उक्तावपि उच्छ्वासनिःश्वासा इति वाच्यं वक्ष्यमाणवचःसामर्थ्यात्। एकः (षः) मुहूर्त्तः कालविशेषः भणितः सर्वैरनन्तज्ञानिभिः सर्वज्ञैरित्यर्थः। उक्तं चागमे "हिट्ठस्स अणवगल्लस्स, निरुवकिट्ठस्स जंतुणो। एगे ऊसासनीसासे, एस पाणुत्ति वुच्चइ ॥ १ ॥ सत्तपाणूणि से थोवे, सत्तथोवाणि से लवे। लवसत्तहत्तरीए, एस मुहुत्ते वियाहिए ॥ २ ॥" इति ॥]

[परिणामि जीवमुत्तं, सपएसा एग खित्तकिरियाय।
णिच्चं कारणकत्ता, सव्वगयमियरेहि अपवेसे॥८॥]॥१५॥

[(अ०) तदेवं जीवतत्त्वाजीवतत्त्वनिरूपणेन षड् द्रव्याणि प्रस्थापितानि, तत्र षट्सु द्रव्येषु किं किं द्रव्यं परिणामित्वादिपर्याययुगिति प्ररूपणायाह—परिणमनं परिणामः, स च "परिणामो ह्यर्थान्तर-गमनं न च सर्वथा विनाशः। न च सर्वथा व्यवस्थानं, परिणामस्तद्विदामिष्ट" ॥ १ ॥ इत्येवंलक्षणः पर्यायान्तरप्राप्तिरिति तात्पर्यं, सोऽस्यास्तीति परिणामी, परिणामिनौ च जीवपुद्गलौ स्वभावत एव, नान्ये, अन्येषां धर्मास्तिकायादीनां औपाधिके परिणामित्वे सत्यपि न तदिह ग्राह्यं स्वभावतः सदैवैकरूपत्वात्, चैतन्यवान् जीवः स च जीव एव, मूर्त्तीरूपादिसन्निवेशस्तदस्यास्तीति मूर्त्तं, तच्च पुद्गलद्रव्यमेव, निरंशा विभागाः प्रदेशास्तैः सह वर्त्तन्ते ये च ते सप्रदेशास्ते च धर्माधर्माकाशजीवपुद्गलाख्याः पञ्च, सप्रदेशत्वादेवास्तिकाया अपि त एव पञ्च, अस्तीनां प्रदे-

शानां कायः समूह अस्तिकाय इति व्युत्पत्तेः, धर्माधर्माकाशद्रव्याण्येकैकानि । अवगाहदानसामर्थ्यादाधाररूपं क्षेत्रमाकाश एव, जीवपुद्गलौ विस्रसाप्रयोगाभ्यां क्रियावन्तौ, धर्माधर्माकाशकाला नित्यद्रव्याणि शाश्वतस्वरूपाणि, पुद्गलजीवौ तु परिणामित्वादेवानित्यौ, धर्माधर्माकाशकालपुद्गलाः गतिस्थित्यवगाहवर्त्तनाशरीरवाङ्मन. प्राणापानादिजीवकार्यहेतव इति पञ्चकारणद्रव्याणि। पुण्यपापबन्धमोक्षादिकर्तृत्वं जीवस्येति कर्त्ता जीव एव। लोकालोकव्यापित्वरूप सर्वगतत्वं त्वाकाशस्यैव, लोकाकाशव्यापित्वापेक्षया तु धर्माधर्मयोरचित्तमहास्कन्धावस्थायां पुद्गलस्य केवलिसमुद्घातावस्थायां जीवस्यापि। कालद्रव्यं तु मनुष्यक्षेत्रपेक्षया सर्वव्यापि न तु बहिः। सर्वद्रव्याणामेकस्मिन् क्षेत्रेऽन्योन्यप्रवेशसत्त्वेऽपि स्वस्वस्वरूपापरित्यागादप्रवेशत्वम् ॥ ]"

**[ दुण्णि य एगं एगं, पंचत्ति य एग दुण्णि चउरो य।**
**पंचय एगं एगं, एएसि एय विण्णेयं ॥ ९ ॥ ] ॥ १६ ॥**

[ (अ०) 'दुण्णि'त्ति द्वौ जीवपुद्गलौ, एकं जीव, द्रव्यं एकं पुद्गलद्रव्यं, पञ्च धर्माधर्माकाशजीवपुद्गलद्रव्याणि, त्रीणि धर्माधर्माकाशद्रव्याणि, एकमाकाशद्रव्यं, द्वौ जीवपुद्गलौ, चत्वारि धर्माधर्माकाशकालद्रव्याणि, पञ्च धर्माधर्माकाशकालपुद्गलाः, एकं जीवद्रव्यमेकमाकाशद्रव्यम ॥ ]

**सा उच्चगोअमणुदुग–सुरदुगपंचिंदिजाइपणदेहा।**
**आइतितणूणुवंगा, आइमसंघयणसंठाणा ॥ ८ ॥१७॥**

( प्रा० अ० ) 'सा उ०' शातावेदनीयं कर्म, उच्चैर्गोत्रं, मनुष्यद्विकं मनुष्यगतिर्मनुष्यानुपूर्वी, आनुपूर्वीनाम द्विसमयादिविग्रहेण भवान्तरं गच्छतो जन्तोर्वृषभनासिकारज्जुकल्पा अनुश्रेणिनयननिमित्त्यर्थः, देवगतिर्देवानुपूर्वी, पञ्चेन्द्रियजातिनाम, औदारिकवैक्रियाहारकतैजसकार्मणरूपाणि देहानि, औदारिकवैक्रियाहारकाणामङ्गोपाङ्गानि, वज्रर्षभनाराचसंहननं, समचतुरस्रसंस्थानं ॥ ८ ॥

( वृ० ) यदुदयात् सातं सौख्यमनुभवति तत्सातवेदनीयम् १,

यदुदयादुत्तमकुले उत्पत्तिस्तदुच्चैर्गोत्रम् २, यदुदयान्मनुष्यगतौ मनुष्यानुपूर्व्या चोत्पादस्तन्मनुष्यद्विकम् ४, यदुदयाद्देवगतौ देवानुपूर्व्या चोत्पादस्तद्देवद्विकमेवं ६, तत्रानुपूर्वी कोऽर्थः एतस्माद्देवादिभवाच्च्युतस्य मनुष्यादिभवान्तरं चाप्राप्तस्यान्तराले यः कालः सा अनुपूर्वी। यदुक्तं कर्म्मग्रन्थेषु 'खित्तविवागाणुपुव्वी' इति, यदुदयात्पञ्चेन्द्रियजातित उत्पत्तिः सा पञ्चेन्द्रियजातिः७, देहाः पञ्च, औदारिक १ वैक्रिय २ आहारक ३ तैजस ४ कार्म्मणरूपाः तत्र यदुदयादौदारिकमसारपुद्गलमयं तिर्यग्मनुष्यशरीरादिकमुत्पद्यते, तदौदारिकं, यदुदयाद्वैक्रियैः सारतरैः पुद्गलैर्देवनैरयिकादिशरीरमुत्पद्यते तद्वैक्रियं ९, यदुदयाच्चतुर्दशपूर्वधरः सञ्जातागमसंशयः आहारकपुद्गलैर्वज्राद्याद्यादिभिरप्यप्रतिहतैः शरीरं करोति तदाहारकशरीरम् १०, यदुदयादाहाररसादिकं जीर्यति तत्तैजसशरीरं ११, यदुदयादितरशरीराभावेनकर्म्मपुद्गलमयं शरीरं भवति तत्कार्म्मणं १२, तदन्तरालविग्रहगतौ केवलिसमुद्घातावसरे त्रिसमयमुत्कृष्टं स्यात्। तस्मिंश्च सति जीवोऽनाहारकः तदेवं शरीरपञ्चकं आद्यत्रिकतनूपाङ्गानि, आद्यानामौदारिकवैक्रियाहारकशरीराणामुपाङ्गानि शिरःपृष्ठादीनि मिश्ररूपाणि, तथाहि-औदारिकमिश्रमिति लयं यदुदयाद्भवतीत्यर्थः, कथमेषां मिश्रसम्भवः ?, इति उच्यते-औदारिकं तनुं त्यक्त्वा देवादिगतौ वैक्रियशरीरं सृजतस्तस्मिन्नपूर्णे मिश्रता। एवं शेषयोरपि तैजसकार्मणयोस्तु न मिश्रत्वम्, अङ्गोपाङ्गाभावादित्युपाङ्गत्रयं१५, आदिमसंहननसंस्थाने, संहननानि षट्, तत्रादिमं संहननं वज्रर्षभनाराचं, तस्य किं स्वरूपम्। ? इत्युच्यते- वज्रं कीलिका, ऋषभः पट्टबन्धः,उभयतो मर्कटबन्धः नाराचं,यदुदयादेवमस्थिरूपना(रचना) यत्र तद्वज्रर्षभनाराचसंहननम्। संस्थानानि षट् तेष्वादिमं संस्थानं समचतुरस्राख्य प्रमाणोपेतोर्द्ध्वाधःकायरूपं यदुदयाद्भवति १७

अत्र द्विवचनस्य बहुवचनं प्राकृतत्वात्, यदुक्तं "बहुवयणे दुवयणं, छट्ठिविभत्तीइ भन्नइ चउत्थी । जह हत्था तह पाया, नमुत्थु देवाहिदेवाणं" इति ॥

(सा० अ०) 'साउच्चगोअ इति', इति पुण्यतत्त्वस्य एते द्विचत्वारिंशद्भेदा भवंति । यथा—सातं सातावेदनीयं कर्म, येन जीवः सौख्यानि लभते १, उच्चैर्गोत्रं यस्मिन्नुत्पन्नो जीवः सर्वजनमान्यः स्यात् २, मनुष्यद्विकं मनुष्यगति—मनुष्यानुपूर्वीरूपम्, यया कर्मप्रकृत्या जीवो मनुष्यगतित्वं लभते सा मनुष्यगति ३,। यया कर्मप्रकृत्या मनुष्यगतिबद्धायुर्जीवोऽन्यत्र गच्छन् मनुष्यगतौ आनीयते सा मनुष्यानुपूर्वी ४, । सुरद्विकं सुरगति—सुरानुपूर्वीरूपं। ५-६, मनुष्यगति—मनुष्यानुपूर्वीवत् ज्ञेयं । पंचेंद्रियजाति यया जीवस्य पंचेंद्रियत्वं स्यात् । ७, पच देहाः शरीराणि । औदारिकं वैक्रिय आहारकं तैजसं कार्मणं च । औदारिकं उदारैः स्फारैः पुद्गलैः निष्पन्नं तत् औदारिकम् । तिर्यङ्मनुष्याणां योग्य शरीरम । ८, वैक्रियं विविधक्रियाया निष्पन्नं देवनारकाणां शरीरं तच्च स्वाभाविकं वैक्रियलब्धिकृतं च शरीरं ज्ञेयम ।९, आहारकशरीरं यत् चतुर्दशपूर्वधरैः संदेहोच्छेदाय तीर्थंकरऋद्धिदर्शनाय वा महाविदेहगमनार्थ एकहस्तप्रमाणमत्यंतविशिष्टरूपसंपन्नं विधीयते शरीरं तत् आहारकशरीरम् १०,। तैजसशरीरं तत् येन शरीरेण जीवैः आहारो गृहीत. खलरसादिधातुरूपतया परिणतिं नीयते यद्वशात्तपोलब्ध्या तेजोलेश्यानिर्गमश्च क्रियते तत्तैजसं । ११, कार्मणशरीरं अष्टविधकर्मविकाररूपं सर्वशरीरकारणभूतं। १२, तैजसकार्मणशरीरे संसारिजीवानां अनादिकालसंबद्धे भवतः । मोक्षगमनं विना तयोः कदापि वियोगो न स्यात् । एवं द्वादशपुण्यप्रकृतयोऽभूवन् । आदिशरीरत्रयस्य उपांगानि । औदारिकस्य १३ वैक्रियस्य १४ आहारकस्य १५, तैजसकार्मणयोर्न भवन्ति । आदिसंहननं वज्रऋषभनाराचसंहननलक्षणं । १६, संस्थानं समचतुरस्ररूपं । १७ ॥

वन्नचउक्का गुरुलहु, परघाऊसास आयवुज्जोअं ।
सुभखगइनिमिणतसदस, सुरनरतिरिआऊतित्थयरं ॥१९॥

( प्रा० अ० ) 'वन्न०' शुभा वर्णगन्धरसस्पर्शाः, अगुरुलघुनाम कर्म "अग न गुरु न लहुअं, जावइ जीवस्स अगुरुलहुउदया" "। परघा उदया पाणी, परेसिं वलिणंपि होइ दुद्धरिसो ॥" "ऊससिणलद्धिजुत्तो, हवेइ ऊसासनामवसा"। "रविबिंबे उ जिअंगं, तावजुअं आयवाऊ" "अणुसिणपयासरूवं, जीअंगमुज्जोयए इहुज्जोआ ॥" शुभविहायोगतिर्हंसादीनामिव, "अङ्गोवंगनियमणं, निम्माणं कुणइ सुत्तहारसमं", "तस १ बायर २ पज्जत्त ३, पत्तेअ ४ थिरं ५ सुभं च ६ सुभगं च ७। सुस्सरा ८ इज्ज ९ जसं, तसदसगं" सुराद्यायुस्त्रयं "तित्थेण तिहुअणस्स वि, पुज्जो से उदयकेवलिणो" ॥ ९ ॥ अथपापभेदानाह—

( टृ० ) 'वण्णचउक्क'त्ति यदुदयाज्जीवस्य शुभो वर्णः शुभो गन्धः शुभो रसः शुभः स्पर्शः स्यादिति वर्णचतुष्कं २१, यदुदयात् सर्वजीवापेक्षया निजं निजं शरीरं अगुरुलघु न च गुरुकं न च लघुकं भवति तदगुरुलघुनामकर्म्म २२, यदुदयात् वीर्यातिशयेन शत्रून् व्यापादयति तत्पराघातनामकर्म २३, यदुदयात् जीवितव्यलक्षण उच्छ्वासनिःश्वासवातः प्रवर्त्तते तदुच्छ्वासनामकर्म्म २४ यदुदयाद्रविविम्बे तापवच्छरीरं भवति तत्सूर्यविम्बस्यातपनामकर्म्म २५, यदुदयादनुष्णेऽपि देहे खद्योतवदुद्योतः स्यात्तदुद्योतनामकर्म्म २६, यदुदयात् हंसगजादिवच्च( सुंद )रा गतिर्भवति सा शुभविहायोगतिः २७, यदुदयात् स्वस्वस्थानेषु चक्षुराद्यङ्गोपाङ्गानां निष्पत्तिस्तन्निर्माणनामकर्म्म२८, 'तसदसग'त्ति यदुदयात्त्रसति चलति द्वीन्द्रियादिर्जीवस्तत्त्रसनामकर्म्म२९, यदुदयाच्छद्मस्थगोचरीभूतं षड्विधजीवनिकायस्य शरीरं तद्बादरनामकर्म्म ३०, यदुदयादाहारशरीरेन्द्रियोच्छ्वासनिःश्वासभाषामनोभिः परिपूर्णता स्यात् तत्पर्याप्तनामकर्म ३१, यदुदयात् प्रतिजीवमौदारिकादिशरीरं स्यात्तत्प्रत्येकनामकर्म्म ३२,यदुदयाद्दन्तास्थ्यादिनिश्चलता स्यात् तत्स्थिरनामकर्म्म ३३, यदुदयात् मूर्द्धादिप्रधानाङ्गानां निष्पत्तिः तच्छुभनामकर्म्म

३४, यदुदयात् सर्वजनप्रियत्वं भवति तत्सुभगनामकर्म्म ३५, यदुदयात् वेणुवीणादिवन्मधुरध्वनिरुत्पद्यते तत् सुस्वरनामकर्म्म ३६, यदुदयात् सर्वत्र मान्यता तदादेयनामकर्म्म ३७, यदुदयाद्यशः कीर्त्तिश्च लभ्यते तद्यशःकीर्त्तिनामकर्म्म ३८, इति त्रसदशकम्। यदुदयात् सुरनरतिर्यगायुरुत्कृष्टमायुस्तत्सुरनरतिर्यगायुरिति ३९-४०-४१। ननु तिर्यगायुषः कथमुत्तमत्वम्, उच्यते, तस्यापि युगलिकतिर्यगपेक्षया प्रधानत्वं,पुण्यप्रकृतित्वात्। येनसुरेन्द्रनरेन्द्रादिभिः पूजितः स्यात् तत्तीर्थंकरनामकर्म्म ४२। इति द्विचत्वारिंशत्पुण्यप्रकृतय इति गाथाद्वयार्थः॥ पुण्यतत्त्वस्वरूपमुक्त्वा चतुर्थपापतत्त्वस्य प्रकृतसङ्ख्यां गाथाद्वयेनाह–

(सा० अ०) वर्णचतुष्कं वर्णगन्धरसस्पर्शरूपम् १८-१९-२०-२१। अत्र पुण्यप्रकृत्यधिकारे प्रशस्तं ग्राह्यं, अप्रशस्तं पुनः पापप्रकृत्यधिकारे कथयिष्यते। अगुरुलघुनामकर्म येन कर्मणा जीवानां शरीरं न गुरुलघु स्यात् किंतु समताभावे स्यात्। २२, पराघात नामकर्म येन परेषां बलवतामपि जीवः अनाकलनीय स्यात्। २३, उच्छ्वासनामकर्म येन जीवः श्वासोच्छ्वासलब्धियुक्त स्यात्। २४, आतपनामकर्म येन जीवस्य स्वयमनुष्णमपि उष्णप्रकाशसंयुक्त शरीरं स्यात् यथा सूर्यमंडले पृथ्वीकायजीवानां, इदं सूर्यमंडले एव नान्यत्र २५। उद्योतनामकर्म येन जीवानां अनुष्णप्रकाशयुक्तं शरीरं स्यात्, यथा चंद्रमंडलज्योतिश्चक्रादिषु। २६, शुभखगतिः शुभविहायोगतिनामकर्म, विहायसा नभसा गतिः गमनं विहायोगतिः। २७, विहायोग्रहणं चतुर्गतिव्यामोहविच्छेदार्थं। यया जीवानां शुभा गतिः स्यात्, यथा हंसगजवृषभादीनाम्। निर्माणनामकर्म येन जीवशरीरे अंगप्रत्यंगानां नियतप्रदेशव्यवस्थापनं क्रियते यथा सूत्रधारेण पुत्तलिकादौ। २८, त्रसदशकं अग्रे व्याख्यास्यते। ३८, सुरनरतिर्यगायुस्त्रितयं यैः कर्मभिः देवमनुष्यतिर्यग्भवेषु जीव्यते। ४१, तीर्थंकरनामकर्म येन चतुस्त्रिंशदतिशयादितीर्थंकरऋद्धिसंयुक्तो जीवः त्रिभुवनस्यापि पूज्यः स्यात्। ४२, केवल्यवस्थायां तस्योदयः स्यात्। इति द्विचत्वारिंशत् भेदाः पुण्यप्रकृ-

तीनां ज्ञेयाः । अथ पूर्वोक्तं त्रसदशकं व्याख्यानयति । त्रसनाम कर्म येन "त्रस्यंति उष्णाद्यभितप्ताः छायादौ गच्छंतीति त्रसाः" द्वींद्रियादिनामकर्मोदयवर्तिनो जीवाः । १, बादरनामकर्म येन जीवा बादराः स्थूलाश्चक्षुर्ग्राह्या भवंति, येन मनुष्यैर्जीवशरीरं दृश्यते इति भावः । २, पर्याप्तिनामकर्म येन जीवा निजपर्याप्तियुक्ता भवंति । ३, प्रत्येकनामकर्म येन एकस्मिन् जीवशरीरे एक एव जीवः । ४, येन बहवो जीवा एकशरीरे भवंति तत्साधारणं नामकर्म पापप्रकृतिमध्ये कथयिष्यते । स्थिरनामकर्म येन जीवानां दंतास्थ्यादि स्थिरं स्यात् । ५, शुभनामकर्म येन जीवानां नाभेरूर्ध्वशरीरं शुभं स्यात् । ६, सुभगनामकर्म येन जीवः सर्वजनवल्लभः स्यात् । ७, सुस्वरनामकर्म येन जीवानां माधुर्यादिगुणसुस्वरः स्यात् । ८, आदेयनामकर्म येन जीवः सर्वजनमान्यवचनः स्यात् । ९, यशःकीर्तिनामकर्म येन जीवो यशःकीर्तियुक्तो भवति । १०, एवंद्विचत्वारिंशद्भेदभिन्नं तृतीयं पुण्यतत्त्वं प्ररूपितम् ॥

**[ तस बायर पज्जत्तं, पत्तेयथिरं सुभंच सुभगं च ।**
**सूसर-आएज्जजसं, तसाइदसगं इमं होइ ॥११॥ ] २०॥**

[ (अ०) व्याख्यातस्वरूपेयम् ॥ ]

**नाणंतरायदसगं, नव बीए नीअसायमिच्छत्तं ।**
**थावरदस नरयतिगं, कसायपणवीस तिरिअदुगं॥१०॥२१।**

( प्रा० अ० ) 'नाणं०' ज्ञानान्तरायकर्मणोर्दशकं, मत्यादिज्ञानावरणपञ्चकं दानलाभभोगोपभोगवीर्यान्तरायपञ्चकं च । द्वितीये दर्शनावरणीये कर्म्मणि नव कर्म्मप्रकृतयो भवन्ति । चक्षुरचक्षुरवधिकेवलदर्शनावरणानि ४, निद्रा १ निद्रानिद्रा २ प्रचला ३ प्रचलाप्रचला ४ स्त्यानर्द्धि ५ रूपाः पञ्च निद्राः । एवं ९ । नीचैर्गोत्रं, असातवेदनीयं, मिथ्यात्वं, "थावर १ सुहुम २ अपज्जं ३ साहारण ४ अथिर ५ असुभ ६ दुभगाणि ७ । दूसर ८ अणाइज्ज ९ जसं १०, थावर दसगं विवज्जत्थं" ॥ १ ॥ नरकत्रिकं नरकगतिनरकानुपूर्वीनरकायूरूपं, 'कसायपणवीसं ति' षोडशकषायाः

नव नोकषायाः । एवं २५, सञ्ज्वलनप्रत्याख्यानकाप्रत्यख्यानका-नन्तानुबन्धक्रोधाः ४ । एवं मानाः ४, मायाः ४, लोभाः ४, एवं १६ । हास्यरत्यरतिशोकभयकुत्सापुंस्त्रीनपुंसकवेदाः ९ । तिर्यग्गति १, तिर्यगानुपूर्वी २ ॥

( वृ० )—पञ्चविधज्ञानावरणपञ्चविधान्तरायमीलनात् ज्ञानान्तरायदशकं भवति । तत्र ज्ञानावरणं पञ्चविधम्, मतिश्रुतावधिमनःपर्यायकेवलावरणभेदात् । तत्र मतिज्ञानं व्यञ्जनार्थावग्रहाभ्यां द्विधा, तत्र व्यञ्जनानि पुद्गलान्यादत्ते व्यञ्जनावग्रहः । स च नयनमनोभ्यां पुद्गलान् न गृह्णाति, तत्पाटनपूरणप्रसङ्गात्, शेषेन्द्रियचतुष्केण गृह्णाति इति व्यञ्जनावग्रहश्चतुर्धा । अर्थावग्रहस्तु पदार्थपरिच्छेदः, स चावग्रहेहापायधारणाभेदेन प्रत्येकं षडिन्द्रियसम्बन्धेन चतुर्विंशतिधा, तत्र प्रथमाक्षिसन्निपातेन सामान्यतः पदार्थदर्शनमवग्रहः । किमयं स्थाणुर्वा पुरुषो वेतीहा । काकादिसन्निपातदर्शनात् स्थाणुरेवायं न पुमानित्यपायः । पुराप्यत्र स्थाणुरेवासीदिति धारणा । एवं मनोयुक्तैः शेषेन्द्रियैरपि अवग्रहादिकल्पना कार्या । एवं यदुदयादष्टाविंशतिभेदं मतिज्ञानमाव्रियते तन्मतिज्ञानावरणम् १ । श्रुतज्ञानं पुनः अक्षरश्रुतं वर्णात्मकम् १, अनक्षरश्रुतं सेंटिकाचप्पुटिकादिवादनम् २, संज्ञिश्रुतं पञ्चेन्द्रियशब्दादि ३, असंज्ञिश्रुतं द्वित्रिचतुरसंज्ञिपञ्चेन्द्रियशब्दादि ४, सम्यक्श्रुतं जिनोक्तवचनम् ५, मिथ्याश्रुतं मिथ्यादृष्टिप्ररूपितं शास्त्रम् ६, सादिश्रुतं प्रतितीर्थकरतीर्थापेक्षया नवनवसूत्रकरणं ७, अनादिश्रुतं प्रवाहरूपेणार्थस्य सर्वतीर्थङ्करतीर्थेषु प्रवर्त्तनम् ८, सपर्यवसितं प्रतितीर्थङ्करतीर्थप्रान्ते सूत्रविच्छेदः ९, अपर्यवसितं तदर्थापेक्षया विच्छेदाभावः १०, गमिकं सदृशपाठरूपम् ११, अगमिकं असदृशपाठात्मकम् १२, अङ्गप्रविष्टं द्वादशाङ्गीसूत्रगतम् १३, अनङ्गप्रविष्टं प्रकरणादिगतम् १४ । यदुदयादेवं चतुर्दशधा श्रुतज्ञानमाव्रियते तत् श्रुतज्ञानावरणं

२। अवधिज्ञानं तु अनुगामि यत्र तत्र तत्सहैव याति १, अननुगामि यत्रोत्पन्नं तत्रैव तिष्ठति, न तेन सह स्थानान्तरं याति २, हीयमानं पूर्वं बहूत्पद्यते पश्चाच्च हीयते ३, प्रवर्द्धमानं पूर्वं स्वल्पमुत्पद्यते पश्चात् प्रवर्द्धते ४, अनवस्थितं यदृच्छयोत्पद्यते याति च ५, अवस्थितं यावन्मात्रमुत्पद्यते तावन्मात्रमेव तिष्ठति ६ । यदुदयादेवं षड्भेदमवधिज्ञानमाव्रियते तदवधिज्ञानावरणं ३। मनःपर्यवज्ञानं च तत्र ऋजुमतिर्मनुष्यक्षेत्रगतसंज्ञिपञ्चेन्द्रियमनोभावमस्पष्टं किञ्चिन्न्यूनं पश्यति सा ऋजुमतिः, विपुलमतिः सम्पूर्णं सुस्पष्टं च पश्यति सा विपुलमतिः। यदुदयात् एवं द्विप्रकारं मनःपर्यवज्ञानमाव्रियते तन्मनःपर्यवज्ञानावरणम ४। केवलज्ञानं तु लोकालोकप्रकाशकम्, यदुदयात्केवलज्ञानमाव्रियते तत्केवलज्ञानावरणम्, ५। एवं पञ्चविधं ज्ञानावरणम्। 'अंतराय'त्ति अन्तरायः पञ्चधा, दानलाभभोगोपभोगवीर्यान्तरायभेदात्। तत्र यदुदयाद्दाता दानफलवेत्तापि प्रासुकान्नपानवस्त्रादिभागपि सामग्र्यां सत्यामपि यन्न दातुमिच्छति, स दानान्तरायः १, यदुदयात्प्रसिद्धो दाता दातुर्निपुणोऽपि याचको वित्तादि नाप्नोति स लाभान्तरायः २, यदुदयान्मनुष्योऽपि भोगोपभोगसामग्र्यां स्वाधीनायां भोक्तुमुपभोक्तुं च न शक्नोति, तौ भोगोपभोगान्तरायौ ४, यदुदयात् नीरोगस्य तरुणस्य बलवतोऽपि निर्वीर्यता स्यात् स वीर्यान्तरायः ५, एवमन्तरायपञ्चकम्। इति ज्ञानान्तरायदशकम ॥ 'नव वीए' इति, द्वितीयदर्शनावरणाख्ये कर्म्मणि नव प्रकृतयः चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शननिद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धिरूपाः। यदुदयाच्चक्षुषो दर्शनं सामान्यबोधमावृणोति तच्चक्षुर्दर्शनावरणम ११, यदुदयात् दृग्वर्जं शेषेन्द्रियाणां दर्शनं सामान्यावबोधमावृणोति तदचक्षुर्दर्शनावरणम १२, यदुदयादवधेर्दर्शनं सामान्यबोधमावृणोति तदवधिदर्शनावरणम १३, यदुदयात्केवलदर्शनं सामान्यावबोधमा-

वृणोति तत्केवलदर्शनावरणम् १४, यदुदयात् सुप्तः सुखेन प्रतिबुद्ध्यते सा निद्रा १५, यदुदयात्सुप्तो बहुवारं शब्दादिकरणेन दुःखेन प्रतिबुद्ध्यते सा निद्रानिद्रा १६, यदुदयादुपविष्टस्योर्ध्वस्थितस्य वा प्रमीला समभ्येति सा प्रचला १७, यदुदयान्मार्गे चलतोऽपि निद्रा समेति सा प्रचलाप्रचला १८, यदुदयादत्यन्तसङ्क्लिष्टपरिणामाद्दिनचिन्तितमर्थरूपं निद्रांगतः साधयति सा स्त्यानर्द्धिः १९, । एवं नवप्रकारं दर्शनावरणम्, यदुदयाद्भूरिमतिधनसम्पन्नोऽपि सल्लोकैर्निन्द्यते नीचकुले उत्पद्यते वा तन्नीचैर्गोत्रम् २०, यदुदयान्नरकेषु तिर्यक्षु च दुःखमनुभवति तदसातावेदनीयम् २१, यदुदयात्संक्लिष्टपरिणामः सन् जिनधर्म्मद्वेषी तन्मिथ्यात्वम् २२, 'थावरदसग'त्ति तच्च दशधा, स्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगदुस्वरानादेयायशःकीर्त्तिभेदात्, यदुदयात्पृथ्वीकायादिषूत्पद्यते तत्स्थावरकर्म्म २३, यदुदयात्सूक्ष्मपृथ्वीकायादिषूत्पद्यते तत्सूक्ष्मकर्म्म २४, यदुदयात्सर्वपर्याप्तिभिरपर्याप्तः तदपर्याप्तकर्म्म २५, यदुदयादेकस्मिन्नौदारिकशरीरेऽनन्तानां जीवानामुत्पत्तिस्तत्साधारणनामकर्म्म २६, यदुदयाज्जिह्वा भ्रूप्रभृतिचलपदार्था निष्पद्यन्ते तदस्थिरनामकर्म्म २७, यदुदयात्पायूपस्थाद्यङ्गान्युत्पद्यन्ते तदशुभनामकर्म्म २८, यदुदयात्सर्वे लोका निन्दन्ति तद्दुर्भाग्यनामकर्म्म २९, यदुदयाद्विरसो ध्वनिरुत्पद्यते तद्दुःस्वरनामकर्म्म ३०, यदुदयात्सर्वे जीवा न बहुमन्यन्ते तदनादेयनामकर्म ३१, यदुदयात्सर्वैरपि निन्द्यते तदयशोनाम अकीर्तिनामकर्म्म ३२, इति स्थावरदशकं ॥ यदुदयान्नरकगतिर्नरकानुपूर्वी नरकायुश्च जायन्ते तन्नरकत्रिकं ३५ । 'कसायपणवीस'त्ति अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसञ्ज्वलनक्रोधमानमायालोभभेदात् षोडश कषायाः, हास्यरत्यरतिशोकभयजुगुप्सास्त्रीवेदपुंवेदनपुंसकवेदभेदान्नव नोकषायाः, उभयमीलनात् पञ्चविंशतिर्भवन्ति । तत्रानन्तानुबन्धि-

क्रोधमानमायालोभोदयात् सम्यक्त्वप्राप्तिर्न भवति । अप्रत्याख्यान क्रोधमानमायालोभोदयात् न देशविरतिचारित्रप्राप्तिः, प्रत्याख्यान क्रोधमानमायालोभोदयान्न यतित्वप्राप्तिः, सञ्ज्वलनक्रोधमानमाया-लोभोदयान्न वीतरागत्वम् । इति षोडशकषायाः । यदुदयात्सनि-मित्तमनिमित्तं वा परं हसति तत् हास्यमोहनीयकर्म्म १, यदुदया-च्छोभनपदार्थावलोकनेन प्रीतिः तद्रतिमोहनीयम् २, यदुदयादशु-भपदार्थविलोकनेनोद्वेगो भवति तदरतिमोहनीयम् ३, यदुदयात्सु-हृदादिजनविघाते शीर्षहृदयदहनप्रलापादिकरणं तच्छोकमोहनीयम् ४, यदुदयादिहपरलोकाकस्मादाजीवमरणाश्लाघाभया जायन्ते त-द्भयम् ५, यदुदयाद्बाह्याभ्यन्तरदुर्गन्धद्रव्येषु घृणा सा जुगुप्सा ६, यदुदयात्पुरुषं स्त्रीरभिलषति स स्त्रीवेदः ७, यदुदयात्पुंसः स्त्र्युपर्य-भिलाषः स पुंवेदः ८, यदुदयात् स्त्रीपुंसोरुपर्यभिलाषः स नपुंसक-वेदः ९ इति नोकषायाः ६० ॥ यदुदयात्तिर्यग्गतितिर्यगानुपूर्व्योरु-त्पादस्तत्तिर्यग्द्वयम् ६२ ॥

( सा० अ० ) 'नाणंतरायदसगं इति' ज्ञानावरणीयपं-चकं अंतरायपंचकं च एवं दशकं ज्ञातव्यं । ज्ञानावरणपंचकं उच्यते । मतिज्ञानावरणं १ श्रुतज्ञानावरणं २ अवधिज्ञानाव-रणं ३ मनःपर्यायज्ञानावरणं ४ केवलज्ञानावरणं ५ । तत्र मतिज्ञा-नावरणं पंचभि इंद्रियैः षष्ठेन मनसा जीवस्य यद् ज्ञानं स्यात् तन्मतिज्ञानम् । तस्य आवरणं मतिज्ञानावरणं । १, श्रुतं द्विधा द्रव्यश्रुतं भावश्रुतं च, द्रव्यश्रुतं द्वादशांगीलक्षणं । भावश्रुतं द्वादशां-गीसमुत्पन्नोपयोगरूपं, तस्य श्रुतज्ञानस्य आवरणं श्रुतज्ञानावरणं । २, अवधिज्ञानं द्विप्रकार गुणहेतुकं भवहेतुकं च । देवनारकाणां भव-हेतुकं, श्राद्धसाधूनां गुणहेतुकं स्यात् । तस्य आवरणं अवधिज्ञा-नावरणं । ३, मनःपर्यवज्ञानावरणं मन पर्यायज्ञानं सार्द्धद्वितय द्वीपसमुद्रान्न्यितसंज्ञिपंचेंद्रियमनोविषयं द्विभेदं ऋजुमतिविपुल-मतिरूपं साधूनामेव भवति । तस्य आवरणं मनःपर्यवज्ञानाव-रणं । ४, केवलज्ञानावरणं घनघातिचतुष्टयक्षयसमुत्पन्नं सकललो-

कालोकविषयं केवलज्ञानं, तस्य आवरणं केवलज्ञानावरणं । ५, तथा अंतरायपंचकं व्याख्यायते । तच्च दानांतराय–लाभांतराय–भोगांतराय–उपभोगांतराय–वीर्यांतरायरूपं । येन कर्मणा वित्ते पात्रे च प्राप्ते सति दानफलं जानन्नपि न ददाति तद्दानांतरायं । १, येन सामग्रीसमायोगेऽपि लाभो न स्यात् तल्लाभांतरायं । २, येन भोग्यवस्तुप्राप्तावपि भोक्तुं न लभते तद्भोगांतरायं । ३, येन उपभोग्यवस्तुषु विद्यमानेष्वपिउपभोक्तुं न शक्नोति तत् उपभोगांतरायम् । ४, येन नीरोगोऽपि वयस्थोऽपि हीनबलः स्यात् तद्वीर्यांतरायं । ५, पंचकद्वयमीलने दशकं ज्ञातव्यम् । अथ द्वितीये कर्मणि नवभेदाः । ते चेत्थं । चत्वारि दर्शनावरणानि पंच निद्राश्च । तत्र दर्शनावरणानि चक्षुर्दर्शनावरणं अचक्षुर्दर्शनावरणं अवधिदर्शनावरणं केवलदर्शनावरणं । येन चक्षुर्दर्शनमाव्रियते तच्चक्षुर्दर्शनावरणम् ११, येन अपरेंद्रियदर्शनमाव्रियते तत् अचक्षुर्दर्शनावरणम् १२, येन अवधिदर्शनमाव्रियते तत् अवधिदर्शनावरणं । १३, येन केवलदर्शनमाव्रियते तत् केवलदर्शनावरणम् १४, घटपटादिसार्थसामान्याकारपरिज्ञानं दर्शन ज्ञातव्यम् । पदार्थविशेषाकारपरिज्ञानं पुनर्ज्ञानं ज्ञातव्यं । अयमेवं च ज्ञानदर्शनयोर्भेद । अथ निद्रापंचकं निद्रा–निद्रानिद्रा–प्रचला–प्रचलाप्रचला–स्त्यानर्द्धिलक्षणं । तत्र यस्यां सत्यां सुखेन जागर्त्ति सा निद्रा । १५, यस्यां पुनर्दुःखेन जागर्त्ति सा निद्रानिद्रा । १६, स्थितस्य उपविष्टस्य वा या समागच्छति सा प्रचला । १७, मार्गे गच्छतः स्वतः या समागच्छति सा प्रचलाप्रचला । १८, या दिनचिंतितं कार्यं रात्रौ करोति वासुदेवार्द्धबला च स्यात् सा स्त्यानर्द्धिः । १९, एवं दर्शनचतुष्कनिद्रापंचकमीलने नव भेदाः पूर्वोक्तसहिता एकोनविंशतिर्जाताः । नीचैर्गोत्रं यदुदयाज्जीवानां नीचकुले जन्म स्यात् । २०, असातावेदनीयं येन जीवा दुःखपरंपरां लभते तच्च प्रायस्तिर्यग्नरकेषु स्यात् । २१, मिथ्यात्वं—"अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च, मिथ्यात्वं तन्निगद्यते" ॥१॥ इत्यादि लक्षणम् । २२ । स्थावरदशकं अग्रे व्याख्यास्यते । ३२ । नरकत्रिकं नरकगति–नरकायु–नरकानुपूर्वीलक्षणं । यया जीवो नरके याति सा नरकगतिः । ३३, येन जीवो नरके तिष्ठति तन्नरकायुः । ३४, यया जीवो बलान्नरके नीयते सा नरकानुपूर्वी । ३५, कषायाः पं-

चर्विंशतिः, ते चैवं षोडश कषायाः नव नोकषायाः । तत्र कषायाः क्रोध–मान–माया–लोभरूपाः । प्रत्येकं चतुष्प्रकाराः । अनंतानुबंधिक–अप्रत्याख्यानक–प्रत्याख्यानक–संज्वलनभेदैर्बोद्धव्या. । तत्र अनंतानुबंधिका आजन्मावधिभाविनः नरकगतिप्रदायिनः सम्यक्त्वघातिना ज्ञेयाः । अप्रत्याख्याना वर्षावधिभाविनः तिर्यग्गतिदायिनः देशविरतिघातिन. । प्रत्याख्याना मासचतुष्टयभाविनः मनुष्यगतिदायिन. साधुधर्मघातिन. । संज्वलनाः पुन. पक्षावधयो देवगतिप्रदाः केवलज्ञानघातिनः । एवं क्रोधादयः प्रत्येकं चतुर्भेदाः षोडशाऽभुवन् । नोकषाया नव हास्यादिषट्कवेदत्रयरूपा. । तत्र हास्यषट्कं हास्य–रति–अरति–शोक–भय जुगुप्सालक्षणं ज्ञातव्यम् । तत्र येन सनिमित्तं निर्निमित्तं वा हास्यं स्यात् तत् हास्यमोहनीयं । येन मनोहरेषु शब्दरूपादिपदार्थेषु रागः स्यात्तत् रतिमोहनीयम् । येन पुन. अमनोहरेषु तेषु उद्वेगः स्यात् तत् अरतिमोहनीयं । येन अभीष्टवियोगादिदुःखं ध्रियते तत् शोकमोहनीयं। येन जीवानां नानाविधनिमित्तैर्भयमुत्पद्यते तत् भयमोहनीयं । येन बीभत्सवस्तुदर्शनेन निंदादिकं करोति तत् जुगुप्सामोहनीय। अथ वेदत्रय पुंवेद–स्त्रीवेद–नपुंसकवेदरूपं । तत्र येन स्त्रिय प्रति अभिलाष. स्यात् स पुंवेद· तृणदाहतुल्य. । येन पुरुषं प्रत्यभिलाषः स्यात्स स्त्रीवेदः करीषदाहतुल्यः । येन पुंस्त्रीविषये अभिलाष. स्यात् स नपुंसकवेदः नगरदाहतुल्यः । एवं षोडशकषायैः नवनोकषायै. कषायपंचविंशतिर्व्याख्याता । एवं पूर्वोक्तपंचत्रिंशत्कषायपंचविंशतिमीलने षष्टिर्भेदाः ।तिर्यग्द्विकं तिर्यग्गतिर्तिर्यगानुपूर्वीरूपं । येन तिर्यग्गतौ गम्यते सा तिर्यग्गति. । ६१, येन तिर्यग्गतौ बलान्नीयते सा तिर्यगानुपूर्वी । ६२ ॥

**इगविगतिचउजाईओ, कुखगइउवघाय हुंति पावस्स ।**
**अपसत्थं वन्नचऊ, अपढमसंघयणसंठाणा ॥ ११ ॥ २२ ॥**

( प्रा० अ० )—एकेन्द्रिय १ द्वीन्द्रिय २ त्रीन्द्रिय ३ चतुरिन्द्रिय ४ जातयः, कुत्सितविहायोगतिः, उपघातः "उवघाया उवहम्मइ, सतणुवयवलंबिगाईहिं", अप्रशस्तं वर्णादिचतुष्कं, प्रथमवर्जसंहननानि ऋषभनाराचनाराचार्द्धनाराचकीलिकासेवार्त्तरूपाणि ५,

अप्रथमसंस्थानानि न्यग्रोधपरिमण्डलसादिवामनकुब्जहुण्डकरूपाणि ५ ॥ अथ द्विचत्वारिंशदाश्रवभेदानाह --

( वृ० )–यदुदयादेकद्वित्रिचतुरिन्द्रियजातिपूत्पादस्ता जातयः ६६, यदुदयादशुभगतिविशेषो जायते सा अशुभविहायोगतिः ६७, यदुदयादङ्गोपाङ्गानां विघातः स उपघातः ६८, यदुदयादशुभवर्णगन्धरससपर्शानामुत्पादस्तदशुभवर्णगन्धरसस्पर्शचतुष्टयम ७२, -थमसंहननसंस्थानरहितानि पञ्चसंहनानि संस्थानानिच । तत्र यदुदयात्कीलिकारहितं सपट्टवन्धोभयमर्कटास्थिरूपं तत् ऋषभनाराचसंहननम् ७३, यदुदयात्कीलिकापट्टवन्धरहितोभयमर्कटवन्धरूपोऽस्थिरचनाविशेषस्तन्नाराचसंहननम् ७४, यदुदयादेकस्मिन् पार्श्वे मर्कटवन्धरूपोऽस्थिरचनाविशेषस्तदर्द्धनाराचसंहननम् ७५, यदुदयात्कीलिकारूपाऽस्थिरचना तत्कीलिकासंहननम् ७६, यदुदयात्परस्परमस्थ्नां मेलस्तच्छेदावर्त्तसंहनम ७७ । इति संहननपञ्चकम् यदुदयान्नाभेरुपरि विस्तरवहुलं अधस्तु हानादिकप्रमाणं वपुर्जायते तन्न्यग्रोधपरिमण्डलसंस्थानम् ७८, यदुदयान्नाभेरधः परिपूर्णलक्षणमुपरि तु प्रमाणलक्षणविसंवादि वपुर्जायते, तत्सादिसंस्थानम् ७९, यदुदयात्पाणिपादशिरोग्रीवं यथोक्तं लक्षणादियुक्तं, शेषं तूदरपृष्ठादि न्यूनाधिकप्रमाणं वपुर्भवति तत्कुब्जसंस्थानम ८०, यदुदयात्पाणिपादाद्यधस्तनः काय उपरितनः शिरोग्रीवादिकश्च विसंवादी भवति । शेषो मध्यकायो यथायुक्तः स्यात् तद्वामनसंस्थानम् ८१, यदुदयात्सर्वावयवेषु प्रायो यथोक्तलक्षणादिमुक्तं वपुर्भवति तत् हुण्डकसंस्थानम् ८२ । इति संस्थानपञ्चकम, इति पापतत्त्वस्य द्व्यशीतिप्रकृतयो भवन्तीति गाथायुगलार्थः । पापतत्त्वमुक्तम् । अथ पञ्चमाश्रवतत्त्वभेदान्गाथाचतुष्टयेनाह ॥

( सा० अ० ) 'एगि' एकेंद्रियजातिः यया जीवानां एकेंद्रियत्वं भवति सा एकेंद्रियजातिः । ६३, एवं द्वि–त्रि–चतुरिंद्रिय-

जातयो ज्ञेयाः। ६४-६५-६६, कुखगतिः यया जीवानां अशुभगतिः, यथा खरोष्ट्रादीनाम् । ६७, उपघातनामकर्म येन स्वशरीरावयवः प्रतिजिन्हा-गलकंठिका-चोरदंतादिभि उपहन्यते तत् उपघातनाम कर्म । ६८, अप्रशस्तं वर्णचतुष्कं वर्ण-गंध-रस-स्पर्शस्वरूपं । ६९-७०-७१-७२, प्रथमं संहननं प्रथमं संस्थानं वर्जयित्वा शेषाणि पंच संहननानि पंच संस्थानानि च पापप्रकृतिमध्ये ज्ञातव्यानि । प्रथमं संहननं प्रथमं संस्थानं पुण्यप्रकृतिमध्ये पूर्वमेव कथितं । तत्र संहननानि वज्रऋषभनाराच १ ऋषभनाराच २ नाराच ३ अर्द्धनाराच ४ कीलिका ५ सेवार्त्तरूपाणि । यस्मिन् अस्थिसंधौ उभयतो मर्कटबंधः पट्ट-कीलिका च स्यात् तत् वज्रर्षभनाराचं तत्पुण्यप्रकृतिमध्ये ज्ञातव्यम् । कीलिकारहितं ऋषभनाराचं । ७३, अस्थिसंधौ उभयतो मर्कटबंधः स्यात् तन्नाराचं । ७४, यत्रैकपार्श्वे मर्कटबंधोऽपरपार्श्वे च कीलिका स्यात् तत् अर्द्धनाराचं । ७५, यत्रास्थीनि कीलिकामात्रबद्धानि स्युः तत्कीलिकाख्यं । ७६, यत्र पुनः अस्थीनि पृथक् स्थितानि परस्परं संलग्नानि भवंति तत् सेवार्त्तं । ७७, नित्यं स्नेहाभ्यंगादिसेवया ऋतं व्याप्तं सेवार्त्तं इति नामार्थः । एवं पंच संहननानि पापप्रकृतिमध्यंगतानि व्याख्यातानि । अथ संस्थानानि तान्याकारविशेषरूपाणि समचतुरस्रपर्यंक-न्यग्रोधपरिमंडल-सादि-कुब्जक-वामन-हुंडाख्यानि । तत्र समचतुरस्रपर्यंकं पर्यंकासनोपविष्टजिनबिंबानामिव ज्ञातव्यं तच्च पुण्यप्रकृतिमध्ये प्रोक्तं। न्यग्रोधं यथा न्यग्रोधो वटः उपरि संपूर्णावयवः अधस्तु हीनः तथा नाभेरुपरिलक्षणोपेततया संपूर्णं अधस्तु हीनं यत्संस्थानं तन्न्यग्रोधपरिमंडलं । ७८, सादिसंस्थानं सह आदिना वर्त्तते तत्सादि । नाभेरधस्तात् यथोक्तलक्षणप्रमाणोपेतं पुनः उपरि हीनं इति भावः । ७९, कुब्जसंस्थानं यत्र पादपाणिशिरोग्रीवादिकं प्रमाणलक्षणोपेतं उरउदरादि च हीनं तत् कुब्जं । ८०, तद्विपरीतं वामनसंस्थानं । ८१, सर्वावयवैरशुभं हुंडसंस्थानं । ८२, सांप्रतं प्रायो मनुष्याणां तदेव । एवं व्यशीतिः पापप्रकृतयो व्याख्याता । अथ पूर्वमुक्तं स्थावरदशकं व्याख्यायते । तिष्ठंति उष्णादितापिता अपि तत्परिहारासमर्था भवंति ते स्थावराः, ते सर्वेऽप्येकेंद्रिया ज्ञातव्याः । स्थावरत्वप्रदायकं कर्म स्थावरनामकर्म । १, सूक्ष्मनामकर्म येन जीवाश्चर्मचक्षुषामदृश्या भवंति, यथा निगो-

दावय: । २, अपर्याप्तनामकर्म येन जीवाः पर्याप्तिं विना म्रियंते । यथा सर्वकालं निगोदाः ३, साधारणनामकर्म येन एकस्मिन् शरीरे अनंतानां जीवानां अवस्थानं भवति, यथा कंदाद्यनंतकायमध्ये । ४, अस्थिरनामकर्म येन जीवानां ओष्ठजिह्वादयोऽवयवा अस्थिराः स्युः । ५, अशुभनामकर्म येन नाभेः अधः शरीरं अशुभं स्यात् । ६, दुर्भगनामकर्म येन जीवा दौर्भाग्यवंतो भवन्ति । ७, दुःस्वरनामकर्म येन जीवानां अमनोज्ञः स्वरः स्यात् । ८, अनादेयनामकर्म येन जीवानां वचनं केनापि न मन्यते । ९, अयशःकीर्त्तिनाम कर्म येन जीवानां लोके अयशःकीर्त्तिः स्यात् । १०, एवं स्थावरदशकं व्याख्यातं । इति चतुर्थं पापतत्त्वं प्ररूपितम् । अथ पंचमं आश्रवतत्त्वं व्याख्यानयति ।

[ चक्खुदिट्ठि अचक्खु, सेसिंदिअ ओहिकेवलेहिं च ।
दंसणमिह सामन्नं, तस्सावरणं तयं चउहा ॥ १२]॥२३॥

[ सुहपडिवोहा निद्दा, निद्दानिद्दा य दुक्खपडिवोहा ।
पयला ठिओवविट्ठस्स, पयलपयला य चंकमओ॥१३]२४

[दिणचिंतिअत्थकरणी, थीणद्धी अद्धचक्किअद्धबला ।
एवं जिणेहिं भणियं, वित्तिसमं दंसणावरणं ॥१४]॥२५॥

[ जावजीव वरिस चउमास, पक्खगा निरयतिरियनर-
अमरा ।
सम्माणुसव्वविरइ-अहक्खाय चरित्तघायकरा ॥१५]॥२६॥

[जलरेणुपुढवीपव्वय-राईसरिसो चउव्विहो कोहो ।
निणिसलया कट्ठीअ-सेलत्थंभोवमो माणो॥१६]२७॥

[मायावलेहि गोमुत्ति, मिंढसिंग घणवंसमूलसमा ।
लोहो हलिद्दखंजण-कद्दमकिमिरागसारिच्छो१७] ॥२८॥

[ जस्सुदया होइ जिए, हास रइ अरइ सोग भय कुच्छा॥
सनिमित्तमन्नहा वा, तं इह हासाइ मोहणिअं ॥१८]२९॥

[पुरिसित्थीतदुभयं पइ, अहिलासो जव्वसा हवइ सो उ।
थीनरनपुंवेउदओ, फुंफुमतणनगरदाहसमो ॥१९] ॥३०॥

[संघयणमट्ठिनिचओ, तं छद्धा वज्जरिसहनारायं।
तह रिसहनारायं, नारायं अद्धनारायं ॥ २० ॥ ] ३१ ॥

[कीलिअ छेवट्ठ इह, रिसहो पट्टो अ कीलिआ वज्जं।
उभओ मक्कडबंधो, नारायं इममुरालंगे ॥ २१ ] ॥ ३२ ॥

[समचउरंसं१ निग्गोह२,साइ३ वामण४ खुज्ज५ हुंडे अ६ ।
जीवाण छ संठाणा, सव्वत्थ सुलक्खणं पढमं ॥२२]॥३३॥

[नाहिइ उवरि बीअं, तइअमहोपिट्ठिउअरउरवज्जं।
सिरगीवपाणिपाए, सुलक्खणं तं चउत्थं तु ॥२३] ॥३४॥

[विवरीयं पंचमगं, सव्वत्थालक्खणं भवे छट्ठं।
संठाणविहा भणिया, जिणिंदवरवीयरागेहिं ॥२४]३५॥

[थावर सुहुम अपज्जं, साहारणअथिरअसुभदुभगाणि।
दुस्सरणाइज्जजसं, थावरदसगं विवज्जत्थं ॥२५॥] ३६ ॥

[(अ०) एताश्च त्रयोदशापि गाथा इगविंत्यादिगाथावचूर्णौ वृत्तौ च लेशतो॥ व्याख्यातस्वरूपाः]

इंदिअकसायअव्वय–जोगा पंच चउ पंच तिन्नि कमा।
किरिआओ पणवीसं, इमा उ ताओ अणुक्कमसो॥१२॥३७

काइय अहिगरणिया, पाउसिआ पारितावणीकिरिआ।
पाणाइवायरंभिअ, परिग्गहिआ मायवत्ती अ ॥१३॥३८

मिच्छादंसणवत्ती, अपच्चक्खाणायदिट्ठि पुट्ठी अ।
पाडुचिअसामंतो–वणीअ नेसत्थिसाहत्थी॥१४॥ ३९॥

**आणवणि विआरणिआ, अणभोगा अणवकंखपच्चइआ। अन्नापओगसमुदाण-पिज्जदोसेरियावहिया ॥१९॥४० ॥**

( प्रा० अ० ) 'इंदि०' स्पर्शन १ रसन २ घ्राण ३ चक्षुः ४ श्रोत्रे-न्द्रियाणि, ५ कषायाः-क्रोधाद्याः ४, अव्रतानि-प्राणातिपातादीनि ५, योगा-मनोयोगाद्याः, ३, क्रिया पञ्चविंशतिरेवम् । कायेनायतमानेन निर्वृत्ता कायिकी १, पशुवधादिप्रवर्त्तनेन खड्गादिनिर्वर्त्तनेन वाधिकरणेन वाऽधिकरणिकी २, जीवाजीवयोरुपरि प्रद्वेषेण भवा प्राद्वेषिकी ३, निर्वेदात् क्रोधादेश्च स्वपरयोः परितापेन पारितापनिकी ४, एवं प्राणातिपातेन प्राणातिपातिकी ५, कृष्याद्यारम्भेणारम्भिकी ६, धान्यादिपरिग्रहेण पारिग्राहिकी ७, मायया परं प्रत्याययति मायाप्रत्ययिकी ८, 'मिच्छा०'. जिनवचनाश्रद्दधानेन मिथ्यादर्शनप्रत्ययिकी ९, अप्रत्याख्यानेन अप्रत्याख्यानिकी १०, कौतुकात् दृष्ट्या निरीक्षणेन दृष्टिकी ११, सन्देहादिपृच्छनेन पृच्छिकी १२, रागादश्वादीनां हस्तस्पर्शेन स्पृष्टिकी वा । जीवाजीवौ प्रतीत्य कर्मबन्धेन प्रातित्यकी १३, स्वगवाश्वादिकं द्रष्टुं समन्तादुपनिपतन्तं प्रशंसन्तं च लोकमवलोक्य हर्षकरणेन सामन्तोपनिपातिकी, अथवा ऽनाच्छादितभाजनेन त्रसानां समन्तादुपनिपातेन सामन्तोपनिपातिकी १४, राजाद्यादेशान्नितरां यन्त्रशस्त्राद्याकर्षणेन नैशस्त्रिकी १५, स्वहस्तेन जीवं शशकादिकं लात्वा जीवेन श्वादिनाऽजीवेन शस्त्रादिना मारयतः स्वाहस्तिकी १६, 'आणवणि'० जीवाजीवयोराज्ञापनेन आज्ञापनिकी आनयनेन आनयनिकी वा १७, जीवाजीवयोर्विदारणेन विदारणिकी १८, अनुपयोगाद्वस्त्रादानग्रहणेन अनाभोगिकी १९, इहलोकपरलोकविरोधाचरणेन अनवकाङ्क्षप्रत्ययिकी क्रिया २०, अन्या एकविंशतितमा दुष्प्रणिधानयोगत्रयेण प्रायोगिकी क्रिया २१, अष्टकर्मणां समुदानं येन भवति तेन सामुदानिकी क्रिया अथवा मेलापकं कृत्वा यल्लिपनावष्कंदादि क्रियते सा सामुदायिकी क्रिया, २२, मायालोभरूपप्रेम्णा भवा प्रैमिकी क्रिया २३, क्रोधमानरूपेण द्वेषेण भवा द्वेषिकी क्रिया २४, अकषायिणां केवलकायजयोगबन्धेन ईर्यापथिक्यां मार्गशोधने भवा ईर्यापथिकी क्रिया २५ ॥ अथ संवरस्य सप्तपञ्चाशद्भेदानाह—

(ट०) स्पर्शनरसनघ्राणचक्षुःश्रोत्रेन्द्रियाणि पञ्च, क्रोधमानमायालोभा इति कषायचतुष्कम्, प्राणातिपातमृषावादादत्तादान मैथुनपरिग्रहसेवनरूपाण्यव्रतानि पञ्च, अशुभमनोवचनकाययोगा इति योगत्रिकम् इत्येते क्रमादनुक्रमेण पञ्चचतुःपञ्चत्रिकरूपाः स्युरिति । क्रियाश्च पञ्चविंशतिः, ताश्चेमा अनुक्रमश इति । कायेनायतनप्रवृत्तेन निर्वृत्ता कायिकी १, पशुबन्धादिप्रवर्त्तनेन अधिकरणिकी २, जीवाजीवयोरुपरि द्वेषकरणेन प्राद्वेषिकी ३, निर्वेदात् क्रोधाद्वा स्वपरयोः परितापनेन पारितापनिकी ४, स्वपरहस्तमारणेन प्राणातिपातिकी ५, कृष्याद्यारम्भेणारम्भिकी ६, जीवाजीवादिवस्तुसंग्रहेण तत्परिग्रहिकी ७, मायया परवञ्चनेन मायाप्रत्ययिकी ८, जिनवचनाश्रद्दधानेन मिथ्यादर्शनप्रत्ययिकी ९, जीवाजीवयोरविरत्या अप्रत्याख्यानिकी १०, अश्वरथादिकौतुकनिरीक्षणेन दृष्टिकी ११, रागद्वेषाभ्यां जीवाजीवस्वरूपप्रच्छनेन पृच्छिकी, अथवा रागादश्वादीनां हस्तस्पर्शनेन स्पृष्टिकी १२, जीवाजीवौ प्रतीत्य कर्म्मबन्धनेन प्रातीत्यकी १३, गवाश्वादिकं किञ्चिद्द्रष्टुं समन्तान्निपतन्तं प्रशंसन्तं च लोकमवलोक्य हर्षप्रकरणेन अथवाऽनाच्छादितभाजने त्रसानां समन्तादुपनिपातेन सामन्तोपनिपातिकी, १४, राजाद्यादेशान्निरन्तरं यत्र शस्त्राद्याकर्षणेन नैशस्त्रिकी १५, जीवेन श्वादिना अजीवेन शस्त्रादिना शशादिकं मारयतः स्वहस्तिकी १६, जीवाजीवयोराज्ञापनेन आनयनेन वा आज्ञापयिकी आनयनिकी वा १७, जीवाजीवयोः स्फोटनेन विदारणिकी १८, अनुपयोगाद्वस्त्रादानेन अनाभोगिकी १९, इहलोकपरलोक विरुद्धाचरणेन अनवकाङ्क्षप्रत्ययिकी २०, प्रणिहितो योगत्रयेण प्रायोगिकी २१, अष्टकर्म्मणां येन समुपादानं भवति तेन सामुदायिकी २२, मायालोभनिश्रिता प्रेमप्रत्ययिकी २३, क्रोधमाननिश्रिता द्वेषिकी २४, अकषायाणां सयोगिगुणस्थानस्थानां च केवलकाययो-

गबन्धेन ईर्यापथिकी २५ ॥ इति द्विचत्वारिंशदाश्रवभेदा इति गाथार्थः ॥ आश्रवतत्त्वमुक्त्वा । षष्ठं संवरतत्त्वमाह—

( सा० अ० ) 'इंदिअ०' इति—इंद्रियाणि कषाया अव्रतानि योगाः एतेषां क्रमेण पंच चत्वारः पंच त्रयः भेदा भवंति । तत्र इंद्रियाणि पंच श्रोत्रादीनि प्रसिद्धान्येव सामान्यतः । विशेषतः पुनस्तानि द्विधा द्रव्येंद्रियाणि भावेंद्रियाणि च । तत्र द्रव्येंद्रियाणि पुद्गलद्रव्यरूपाणि, भावेंद्रियाणि लब्ध्युपयोगलक्षणानि । पुनः द्रव्येंद्रियाणि निर्वृत्युपकरणभेदात् द्विधा । निर्वृतिरपि द्विधा अंतर्बहिश्च । तत्र श्रोत्रेंद्रियस्यान्तर्मध्ये कदंबकुसुमाकारा देहावयवरूपा निर्वृतिरस्ति या शब्दप्रकारग्रहणे वर्त्तते । चक्षुरिंद्रियस्य धान्यमसूराकारा, घ्राणेंद्रियस्य अतिमुक्तकपुष्पाकारा, काहलिकासदृशी वा । रसनेंद्रियस्य क्षुरप्राकारा, स्पर्शनेंद्रियस्य नानाकारा अभ्यंतरा निर्वृतिः । बाह्या निर्वृतिः पुनः सर्वेषां इंद्रियाणां या दृश्यमानास्ति सैव ज्ञातव्या । उपकरणं तेषामेव पुनः कदंबाकारादीनां खड्गस्य छेदनशक्तिरिव स्वस्वविषयग्रहणशक्तिः तद्रूपं ज्ञातव्यं । एवं द्रव्येंद्रियस्वरूपं प्रोक्तं । भावेंद्रियाणि लब्ध्युपयोगरूपाणि । जीवस्य ज्ञानावरणादिकर्मक्षयोपशमभावात् या शब्दादिग्रहणशक्तिः सा लब्धिः । येन पुनः शब्दादीनां ग्रहणपरिणामः स उपयोगः । एतद्द्वयरूपाणि भावेंद्रियाणि । इति पंचापि इंद्रियाणि व्याख्यातानि । क्रोधमानमायालोभरूपा प्रसिद्धा एव चत्वारः कषायाः, हिंसामृषादत्तादानाब्रह्मपरिग्रहलक्षणानि पंचाव्रतानि. मनोयोगः वचनयोग. काययोगश्चेति त्रयो योगा, इति सप्तदशभेदा आश्रवस्य व्याख्याताः । शेषा पंचविंशतिक्रियारूपाः प्रोच्यन्ते । क्रियाः पंचविंशतिः, ताः पुन इमा वक्ष्यमाणलक्षणानुक्रमेण ज्ञातव्याः । तासामेव लक्षणमाह । 'काइअ' इति, 'मिच्छादंसण'० इति, 'आणवणि' इति—कायेन अयतमानेन निर्वृत्ता सा कायिकी कथ्यते । १, अधिकरणिकी पशुवधादिप्रवर्त्तनेन खड्गादिनिर्वर्त्तनेन वाधिकरणेन निर्वृत्ता अधिकरणकी । २, जीवाजीवयोरुपरि प्रद्वेषेण प्राद्वेषिकी । ३, क्रोधादेः स्वपरयोः परितापेन पारितापनिकी । ४, प्राणातिपातेन प्राणातिपातिकी । ५, कृष्याद्यारंभणेन आरंभिकी । ६, धान्यादिपरिग्रहेण परिग्रहिकी । ७, मायया परवंचनेन संजाता मायाप्रत्ययिकी । ८, जिनवचनविप-

रीतपरिणामेन मिथ्यादर्शनेन संजाता मिथ्यादर्शनप्रत्ययिकी । ९, अप्रत्याख्यानेन अविरत्या जाता अप्रत्याख्यानिकी । १०, कौतुकादिनिरीक्षणेन दृष्टिकी । ११, रागाद् द्वेषाद्वा जीवाजीवयोः स्वरूपपृच्छनेन अथवा रागादेश्च वृषभबालकादिविशिष्टवस्तूनां हस्तस्पर्शनेन निर्वृत्ता पृष्टिकी तथा स्पृष्टिकी वा । १२ जीवाजीवादौ प्रतीत्य—आश्रित्य कर्मबंधनेन संजाता प्रातित्यकी । १३, स्वकीयगजाश्ववृषभादिविशिष्टपदार्थं विलोकयितुं लोकं सर्वतः समागच्छंतं प्रशंसा कुर्वतं दृष्ट्वा हर्षकरणेन अथवा अनाच्छादितस्नेहादिभाजने त्रसाणां जीवानां निपतनेन संजाता सामंतोपनिपातिकी । १४, राजाद्यादेशान्नितरां यंत्रशस्त्राद्याकर्षणेन संजाता नैशस्त्रिकी । १५, जीवेन श्वानादिना अजीवेन शस्त्रादिना शशकादिकं स्वहस्तेन मारयतः स्वाहस्तिकी । १६, जीवाजीवयोराज्ञापनेन स्वेच्छया व्यापाररूपेण आनयनेन वा आज्ञापनिकी आनयनिकी वा । १७, जीवाजीवयोर्विदारणेन स्फोटनेन वैदारणिकी । १८, शून्यचित्ततया वस्तूनामादाननिक्षेपणेन. अनाभोगिकी । १९ इह लोक परलोकविरुद्धाचरणेन हिंसादिषु व्यापाराचरणेन अनवकांक्षप्रत्ययिकी । २०, अन्या अपरा एकविंशतितमा । मनोवचनकाययोगदुष्प्रणिधानेन निर्वृत्ता प्रायोगिकी । २१, अष्टानां कर्मणां समुदायेन या भवति सा सामुदायिकी । २२, मायालोभाश्रिता प्रेमिकी । २३, क्रोधमानाश्रिता द्वेषिकी । २४, केवलिनां केवलकाययोगजनितबंधेन संजाता ऐर्यापथिकी । २५, एवं क्रिया पंचविंशतिः । एवं पूर्वोक्तसप्तदशभेदानां पंचविंशतिक्रियाणां च मीलने द्विचत्वारिंशद् भेदा आश्रवस्य ज्ञातव्याः । इत्थं पंचमं आश्रवतत्त्वं प्ररूपितम् ॥ अथ षष्ठं संवरतत्त्वं विवृणोति ॥

**समिई गुत्ती परीसह, जइधम्मो भावणा चरित्ताणि ।**
**पणतिगदुवीसदसबार–पंचभेएहिं सगवन्ना ॥२५॥४१॥**

( प्रा० अ० ) 'समि०' ईर्याद्याः समितयः पञ्च, मनोगुप्त्याद्या गुप्तयस्तिस्रः, परिषहाः—''खुहा १, पिवासा २, सी ३, उन्हं ४; दंसा ५, चेला ६, ऽरइ ७, त्थीओ ८. । चरिआ ९, निसीहिआ १०; सिज्जा ११; अक्कोस १२, वह १३, जायणा १४ ॥ १ ॥ अलाभ

१५, रोग १६, तणफासा १७; मल १८, सक्कार १९, परीसहा । पन्ना २०, अन्नाण २१. सम्मत्तं २२; इअ बावीस परीसहा ॥ २॥" यतिधर्मे.—"खंती १, मद्दव २, अज्जव ३; मुत्ती ४, तव ५, संजमे ६, अ बोधव्वे । सच्चं ७, सोअं ८, अकिं-चणं ९, च वंभं १०, च जइधम्मो ॥ १ ॥" भावनाः—"अनित्यता १ मशरणं २, भव ३ मेकत्व ४ मन्यतां ५ । अशौच ६ माश्रवविधि ७, संवरं ८ कर्म्मनिर्ज्जरां ९, ॥ १ ॥ धर्मस्वाख्याततां १० लोकं ११, द्वादशीं बोधिभावनां १२ ॥" चारित्राणि—प्राणातिपातविरमणादीनि, प्राणा इन्द्रियाद्या दश, "पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायु । प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोगीकरण तु हिंसा ॥ १ ॥" तेषां प्राणानामतिपातः प्राणातिपातः जीवस्य दुःखात्पादनं. न तु जीवातिपातः, तस्माद्विरमणम् । एवं मृषावादविरमणादीनि, अथवा "सामाइअत्थ पढमं, छेओवट्ठावणं भवे बीअं । परिहारविसुद्धीअं, सुहुमं तह संपरायं च ॥ १ ॥ तत्तो अ अहक्खायं, खायं सव्वंमि जीवलोगम्मि । जं चरिऊण सुविहिआ, वच्चंतयरामरं ठाणं ॥ २ ॥" अथ निर्ज्जराभेदानाह—

( वृ० ) ईर्याभाषैषणादाननिक्षेपोत्सर्गरूपाः पञ्च समितयः । तत्र लोकातिवाहिते मार्गे पदं पदं चक्षुषा पश्यतीतीर्यासमितिः १, निरवद्यवचनजल्पनाद् भाषासमितिः २, द्विचत्वारिंशद्दोषरहितान्नादिग्रहणादेषणासमितिः ३, सम्यग्विलोकितासनादिग्रहणान्निक्षेपाच्चादानग्रहणसमितिः ४, निर्जीवस्थण्डिलेषु खेलजल्लादिपरिष्ठापनात् पारिष्ठापनिकासमितिः ५ । इति पञ्च समितयः । पापव्यापारेभ्यो मनोवाक्कायगोपनान्मनोवचनकायगुप्तयः ३ ॥ द्वाविंशतिः परीषहाः—तत्र बुभुक्षायाः सहनेन क्षुत्परीषहः १, तृष्णायाः सहनेन तृट्परीषहः २, शीतर्त्तौ शीतसहनेन शीतपरिषहः ३, उष्णर्तौ तापसहनेन तापपरिषहः ४, वर्षाकाले दंशमशकसहनेन दंशमशकपरीषहः ५, वस्त्रादिपरिग्रहत्यागेन नग्नाग्न्यपरीषहः ६, जीवानामु-

पद्रवस्य सम्यक्सहनेन अरतिपरीषहः ७, स्त्रीरूपादिदर्शनादक्षोभत्वेन स्त्रीपरीषहः ८, गोचरचर्यायामरसविरसाहारग्रहणान्मनस्यविषादेन गोचरचर्यापरीषहः ९, स्त्रीभिः सहैकस्थ्येऽपि चित्ताक्षोभेन निषद्यापरीषहः १०, खरशिलाकाष्ठोपरि शयनाच्छय्यापरीषहः ११, दुर्वचनतर्ज्जनसहनेन आक्रोशपरीषहः १२, यन्त्रादिपीडासहनेन वधपरीषहः १३, दातृकुलागमनाप्रार्थितः भिक्षाग्रहणेन याञ्चापरीषहः १४, कर्म्मवशात् गृहस्थगृहेऽन्नपानादिसामग्र्यां सत्यामपि तदप्राप्तावदीनचित्तत्वादलाभपरीषहः १५, ज्वरातीसारादिरोगसहनेन रोगपरीषहः १६, तृणकण्टकादिव्यथासहनेन तृणपरीषहः १७, मलसहनेन मलपरीषहः १८, तिरस्कारापमानसहनेन सत्कारपुरस्कारपरीषहः १९, प्रज्ञादिदर्प्पसहनेन प्रज्ञापरीषहः २०, अध्ययनक्लेशसहनादज्ञानपरीषहः २१, जिनवचनाश्रद्दधानेन सम्यक्त्वपरीषहः २२ । एवं द्वाविंशतिः परीषहाः ॥ 'जइधम्म'त्ति क्षान्त्यादिको दशविधो यतिधर्मः, तत्र सहिष्णुत्वं क्षमा १, निरहङ्कारता मार्द्दवम् २, निर्म्मायित्वमार्ज्जवम् ३, सद्भावः सत्यम् ४, अलोभत्वं शौचम् ५, प्राणिदया संयमश्चेन्द्रियनिरोधः ६, इच्छानिरोधस्तपः ७, निर्म्ममत्वं त्यागः ८, निष्परिग्रहत्वमाकिञ्चन्यम् ९, अमैथुनत्वं ब्रह्मचर्यम् १०, इति दशविधो यतिधर्म्मः ॥ 'भावण'त्ति पदार्थानां क्षयाविनाशित्वमनित्यम् १, त्राणाभावाज्जीवानामशरणम् २, चतुर्द्दशरज्ज्वात्मके लोके स प्रदेशो नास्ति यो जीवैर्मरणेन न स्पृष्ट इति भवः ३, एक एवोत्पद्यते विपद्यते कर्म्माण्यनुभवति चैकत्वम् ४, देहधनबन्धुभ्यो ह्यात्मनो भिन्नत्वचिन्तनमन्यत्वम् ५, सप्तधातुमयदेहस्याशुचित्वचिन्तनादशुचित्वम् ६, मनोवाक्काययोगैः शुभाशुभकर्म्मार्ज्जनमाश्रवः ७, सर्वाश्रवद्वारनिरोधात् संवरः ८, संसारबीजभूतकर्म्मणां जरणा निर्ज्जरा ९, अर्हदाख्यातधर्म्मश्रवणाद्धर्म्मः १०, स्थित्युत्पत्तिव्ययात्मकद्रव्यपूरणकटिस्थकरवैशाखस्थान-

वर्त्तस्थितलोकचिन्तनाल्लोकभावना ११, जैनतत्त्वनिश्चयावगमाद्बोधिरिति १२। एवं द्वादश भावना ॥ 'चारित्त' त्ति चारित्राणि पञ्च, तत्र त्रसस्थावरशत्रुमित्रादिषु समभावकरणात्सामायिकम् १, व्रतपर्यायच्छेदाच्छेदोपस्थापना २, चत्वारस्तपः कर्तारश्चत्वारो वैयावृत्त्यकर्तार एको वाचनाचार्य इति नवको गणः। तत्र चत्वारो निर्दिष्टं तपः कुर्वन्ति चत्वारो वैयावृत्त्यकराः कल्पस्थितस्तथाचाम्लानि यावत् षण्मासाः। तदन्ते वैयावृत्त्यकरास्तपः कुर्वन्ति, सचाचाम्लानि यावत् षण्मासाः। ततः कल्पस्थितस्तपः शेषास्त्वाचाम्लानि। एवमष्टादशमासप्रमितिः परिहारविशुद्धिर्नामचारित्रम् ३, सञ्ज्वलनक्रोधमानमायालोभबन्धविच्छेदेन सूक्ष्मलोभोदये दशमगुणस्थाने वर्त्तमानस्य सूक्ष्मसम्परायचारित्रम् ४, क्षीणमोहस्य उपशान्तमोहस्य वा उपशान्तमोहक्षीणमोहसयोग्ययोगिगुणस्थानस्यस्य यथाख्यातचारित्रम् ५। इति चारित्रपञ्चकम्। एवं पञ्चभिः समितिभिस्त्रिभिर्गुप्तिभिर्द्वाविंशत्यापरीषहैर्दशधा यतिधर्मेण, द्वादशभिर्भावनाभिः, पञ्चभिश्चारित्रैरेकीकृत्य सप्तपञ्चाशद्भेदाः संवरस्येति गाथार्थः ॥ संवरतत्त्वमुक्त्वा सप्तमनिर्जरातत्त्वस्वरूपं गाथापादेनाह—

(सा० अ०) 'समिइ इति'—संवरतत्त्वस्य सप्तपंचाशत् भेदाः। ते च एवं ज्ञातव्याः। यथा समितयः पंच, गुप्तयस्तिस्त्र, परीषहा द्वाविंशति यतिधर्मो दशभेदः, भावना द्वादशधा, चारित्राणि पंच, एवं क्रमेण समित्यादीनां षण्णां उत्तरार्द्धप्रोक्तभेदसंख्यायोजने सर्वाग्रेण सप्तपंचाशद् भेदा ज्ञातव्याः। तत्र समितयः पंच ईर्यासमितिः १, भाषासमितिः २, एषणासमितिः ३, आदाननिक्षेपणासमिति ४, पारिष्ठापनिकासमितिः ५,। तत्र सम्यक् प्रशस्तार्हत्प्रवचनानुसारेण इतिः गमनं चेर्यासमितिः। ईर्यायाः गमनस्य समिति ईर्यासमितिः। मार्गे गच्छन् युगप्रमाणभूमौ दत्तदृष्टिः साधुः समस्तजीवानां रक्षां कुर्वन् याति सा ईर्यासमितिः इतिभावः। १, भाषासमिति. भाषाया निरवद्यवचनस्य समितिः भाषासमितिः। २, एषणासमितिः यया द्विचत्वारिंशद्दोषविनि-

र्जितः आहारः साधुभिः गृह्यते सा एषणासमितिः । ३, आदाननिक्षेपसमितिः आदानं वस्तूनां ग्रहणं निक्षेपो वस्तूनां स्थापनं, तयो. आदाननिक्षेपयोः समितिः, यद् वस्तूनां ग्रहणं मोचनं तत् प्रथमं चक्षुषा निरीक्ष्य ततो रजोहरणादिना प्रमार्ज्य विधीयते सा आदाननिक्षेपसमितिः इति भावः । ४, पारिष्ठापनिकासमितिः परिष्ठाप्यते परित्यज्यते सदोषादिवस्तु सा पारिष्ठापनिकासमितिः । यत्र कफमूत्रमलादिनिर्जीवस्थाने यतनया परिष्ठाप्यते सा पारिष्ठापनिकासमितिः । ५, एवं पच समितयः व्याख्याताः। अथ गुप्तयः तिस्रः मनोगुप्तिः १, वचनगुप्तिः २, कायगुप्तिः । ३, तत्र मनोगुप्तिः त्रिधा आर्त्तरौद्रध्यानानुबंधिकल्पनाजालपरिहारः १, धर्मध्यानानुबंधिनी माध्यस्थ्यपरिणतिः २, केवलज्ञानिनो योगनिरोधावस्थायां सकलमनोद्रव्यनिरोधश्च ३, इति मनोगुप्तिः । वचनगुप्तिः द्विधा भ्रूसंज्ञादिपरिहारात् मौनाभिग्रहः । १, वाचनापृच्छनादिषु मुखवस्त्रिकाच्छादितवक्त्रस्य भाषमाणस्यापि वागूनियन्त्रणं । २, वचनगुप्तिः सर्वथावचननिरोधनिरवद्यसम्यग्वचनभाषणाभ्यां कृत्वा द्विभेदा, भाषासमितिः पुन सम्यक्वचनप्रवृत्तिरूपतया एकभेदा एव इति वचनगुप्तिभाषासमित्योर्भेदः । कायगुप्तिः द्विधा उपसर्गादिसद्भावे कायोत्सर्गादचलनं, केवलिनां योगनिरोधावस्थायां सर्वथा शरीरचेष्टापरिहारः वा १, तथा सिद्धांतोक्तविधिना मुनीनां कायव्यापारस्य २ । एवं तिस्रो गुप्तयः व्याख्याताः । ३, अथ परीषहा द्वाविंशति । क्षुधापरीषहः निरवद्याहारालाभे क्षुधा सहनीया, न पुनः सावद्याहारग्रहणं कार्यं इत्येवंस्वरूपः । १, पिपासापरीषहः तृषा सहनीया, न पुन गाढतृषापीडितैरपि सचित्तजलं पेयं । २, शीतपरीषहः कायोत्सर्गविहारादिकुर्वतां शीतं लगति तत् सहनीयं, अग्निसेवादि न चिंतनीयं । ३. उष्णपरीषहः ग्रीष्मतापाक्रांतैरपि स्नानवायुव्यंजनवातायनश्रयणादि न विधेयं, आतापनादि कष्टं सहनीयं । ४, दंशमशकपरीषहः कायोत्सर्गादिषु दंशमशककृता विघाताः सहनीयाः । ५, अचेलपरीषह मानप्रमाणोपेतैर्वस्त्रैर्मलिनजीर्णशीर्णैरपि खेदो मनसि न कार्यः । ६. अरतिपरीषहः अमनोज्ञोपाश्रयाहारादिषु अरतिः न कार्या । ७, स्त्रीपरीषहः स्त्रीणां मनोहररूपविभ्रमविलासवाक्यहावभावादिकं दृष्ट्वा चित्तक्षोभो न कार्यः। ८

चर्यापरीषहः वायुवत् अप्रतिबद्धतया विहारः कार्यः, न पुनः एकत्र वासः। ९, नैषेधिकीपरीषहः श्मशाने शून्यागारे सर्पबिले सिंहगुहादिषु कायोत्सर्गस्थैः नानाविधोपसर्गसद्भावेऽपि अशिष्टा चेष्टा न कार्या। १०, शय्यापरीषहः उच्चावचासु शय्यासु शीतोष्णकालादौ मनसि उद्वेगो न विधेयः। ११, आक्रोशपरीषहः अज्ञानलोकप्रोक्तवैभाष्यवाक्यश्रवणे कोपो न कार्यः दृढप्रहारिवत्। १२, वधपरीषहः कोपि दुरात्मा साधूनां वधं करोति तथापि साधुभिः क्रोधो न विधेयः स्कंदकसूरिशिष्यवत्। १३, याञ्चापरीषहः भिक्षावृत्तिकाले परगृहेषु याचने दुःखं मनसि न धार्यं। १४, अलाभपरीषहः अंतरायकर्मोदयात् निर्दोषभिक्षालाभाभावेऽपि चित्ते उद्वेगो न कार्यः ढंढणकुमारवत्। १५, रोगपरीषहः उग्ररोगसंभवेपि आर्त्तध्यानं न कार्यं, सम्यक् सह्यं सनत्कुमारराजर्षिवत्। १६, तृणपरीषहः संस्तारकादौ दर्भादितृणव्यापारे देहपीडायामपि दुःखं न चित्यं। १७, मलपरीषहः मलस्वेदादि शरीरात् न स्फेटनीयं, किंतु यावज्जीवं सम्यक् सहनीयं। १८, सत्कारपुरस्कारपरीषहः बहुलोकनरेश्वरादिकृतस्तुतिवंदनादेः चित्तोन्मादो न कार्यः, उत्कर्षो मनसि न कार्यः। १९, प्रज्ञापरीषहः बहुज्ञानसंभवेऽपि आत्मीयचित्ते गर्वो न कार्यः। २०, अज्ञानपरीषहः ज्ञानावरणीयकर्मोदयात् पठतामपि पाठो नागच्छति तथापि दुःखं मनसि न कार्यं, किंतु कर्मविपाक एव चित्यः। २१, सम्यक्त्वपरीषहः जिनशासनविषये देवगुरुधर्मविषये च संदेहो न विधेयः। २२, एवं द्वाविंशतिः परीषहा व्याख्याताः। अथ यतिधर्मो दशधा—दशप्रकारः। क्षमामार्दवार्जवनिर्लोभतातपःसंयमसत्यशौचाकिंचनत्वब्रह्मस्वरूपः। तत्र क्षमा क्रोधजयः, स उपशमेन स्यात्। १, मार्दवं मृदोर्भावः मार्दवं, अहंकारपरिहारः। २, आर्जवं ऋजोर्भावः, मायात्यागः। ३, निर्लोभता लोभपरिहारः। ४, तपः बाह्यांतरभेदैर्द्वादशधा। ५, संयमः प्राणातिपातविरमणरूपः। ६, सत्यं सद्भ्यो जीवेभ्यो हितं पथ्यं सत्यं। ७, शौचं सर्वजीवेषु सुखकारि वर्त्तनं शौचं, अदत्तादानपरिहारः। ८, अकिंचनत्वं न विद्यते किंचन यस्य सः अकिंचनः, अकिंचनस्य भावः अकिंचनत्वं सर्वपरिग्रहत्यागः। ९, ब्रह्म औदारिकवैक्रियसंबंधिमैथुनपरिहारः। १०, अथ भावना द्वादश। अनित्यभावना १,

अशरणभावना २, भवभावना ३, एकत्वभावना ४, अन्यत्वभावना ५, अशौचभावना ६, आश्रवभावना ७, संवरभावना ८, निर्जराभावना ९, धर्मभावना १०, लोकस्वभावभावना ११, बोधिभावना १२, । तत्र संसारे सर्वपदार्थानां अनित्यता यत् चिंत्यते सा अनित्यभावना । १, अशरणं देहिनां मरणादिभये संसारे शरणं किमपि नास्ति इत्यादिचिंतनं अशरणभावना । २, जीवानां चतुरशीतिलक्षजीवयोनिपरिभ्रमणचिंतनं भवभावना । ३, एकाक्येव जीवः उत्पद्यते विपद्यते कर्माण्युपार्जयति भुंक्ते चेत्यादि चिंतनं एकत्वभावना । ४, जीवानां देहात् पृथक्त्वे सति पुत्रकलत्रादिधनादिपदार्थेभ्योऽत्यंतभेद एकत्वम्, अतः 'तत्त्ववृत्त्या कोपि कस्यापि संबंधी नास्ति'-इत्यादि चिंतनं अन्यत्वभावना । ५, देहस्य सप्तधातुमयस्य नव स्रोतांसि निरंतरं स्रवंति मलमूत्रश्लेष्मादिवस्तूनि बीभत्सानि सहचारीणि संति, अतः 'शुचित्वं कुतः स्यात्', इति चिंतनं अशौचभावना । ६, संसारमध्यस्थितसमस्तजीवानां मिथ्यात्वकषायाविरतिप्रमादार्त्तरौद्रध्यानादिहेतुभिः निरंतरं कर्माणि बध्यमानानि संति इतिचिंतनं आश्रवभावना । ७, मिथ्यात्वादीनां बंधहेतुभूतानां संवरणोपायाः सम्यक्त्वादयः तेषां चिंतनं संवरभावना । ८, निर्जराभावना कर्मनिर्जराख्या द्विधा सकामा अकामा च । तत्र सकामा साधूनां । अकामा च अज्ञानकष्टजनिता जीवानां । तत्र सकामा द्वादशप्रकारतपोविहितकर्मक्षयरूपा । १, अकामा पुनः तिर्यगादिजीवानां तृषाक्षुधाछेदनभेदनभारोद्वहनाद्यकामकष्टसहनेन यः कर्मक्षयः तद्रूपा ज्ञातव्या । एवंविधायाः निर्जरायाः चिंतनं निर्जराभावना । ९, दुस्तरसंसारसागरसमुत्तारणप्रवहणप्रायश्रीजिनप्रणीतश्रीधर्मप्रभावचिंतनं धर्मभावना । १०, चतुर्दशरज्ज्वात्मकलोकस्य कटिसंस्थापितकरनिर्यक्प्रसारितपादपुरुषाकारस्य धर्माधर्मास्तिकायादिषड्द्रव्यैः परिपूर्णस्य लोकस्य चिंतनं लोकभावना । ११, अनंतानंतकालदुर्लभमनुष्यादिसामग्रीयोगेऽपि दुःप्राप्यं प्रायो बोधिबीजं जीवानां इत्यादि चिंतनं बोधिभावना । १२, एवं द्वादशभावनाः व्याख्याताः । १५, अथ चारित्राणि पंच । चारित्राणि पंच सामायिक१छेदोपस्थानीय२परिहारविशुद्धिक३सूक्ष्मसंपराय४यथाख्यात५नामानि । तत्र सामायिकं सर्वसावद्यव्यापारपरित्यागनिरवद्यव्यापारसेवनरूपं ज्ञातव्यं । १,

छेदोपस्थापनीयं गणाधिपेन प्रदत्तं प्राणातिपातविरमणादिपंचमहाव्रतरूपं । २, परिहारविशुद्धिकं नव साधवो गच्छात् पृथग् भूत्वा अष्टादशमासान् यावत् यतिसिद्धांतप्रोक्तरीत्या तपः कुर्वंति तत्परिहारविशुद्धिकं ज्ञेयं । ३, सूक्ष्मसंपरायं सूक्ष्मसंपरायाख्यदशमगुणस्थानकप्राप्तानां साधूनां यच्चारित्रं तत् सूक्ष्मसंपरायं । ४, यथाख्यातं सर्वेषु कषायेषु सर्वथा क्षयं प्राप्तेषु साधूनां यच्चारित्रं तत् यथाख्यातं । ५, एतेषां चारित्राणां मध्ये सांप्रतं प्रथमचारित्रद्वयं विमानमस्ति, शेषाणि त्रीणि चारित्राणि व्युच्छिन्नानि । एवं चारित्रपंचकं व्याख्यातं । एवं समितीनां पंच भेदाः, गुप्तीनां त्रयः, परीषहाणां द्वाविंशतिः, यतिधर्मस्य दश, भावनानां द्वादश, चारित्राणां पंच भेदा, इति सप्तपंचाशद्भेदा संवरतत्त्वस्य संजाताः । इति षष्ठं संवरतत्त्वं संक्षेपतो व्याख्यातम् । अथ सप्तमं निर्जरातत्त्वं व्याख्यानयति ।

[इरियाभासेसणादाणे, उच्चारे समिईसु य ।
मणगुत्ती वयगुत्ती, कायगुत्ती तहेव य ॥ २६ ॥] ॥ ४२ ॥

[खुहा पिवासा सीउण्हं, दंसाचेलारइत्थीओ ।
चरिया निसीहिया सिज्जा, अक्कोसवहजायणा॥२७]॥४३॥

[अलाभरोगतणफासा, मलसक्कारपरीसहा ।
पण्णा अन्नाण सम्मत्तं, इय बावीस परीसहा ॥२८॥]४४॥

[खंतीमद्दवअज्जव, मुत्ती तवसंजमे अ बोद्धव्वे ।
सच्चं सोयं आकिं-चणं च बंभं च जइधम्मो ॥ २९॥ ] ४५॥

[पढममणिच्चमसरणं, संसारो एगया य अन्नत्तं ।
असुइत्तं आसव, संवरो य तह निज्जरा नवमी ॥३०॥]४६

[लोगसहावो बोही, दुलहा धम्मस्स साहगा अरिहा ।
एयाओ भावणाओ, भावेयव्वा पयत्तेणं ॥ ३१ ॥ ]॥ ४७ ॥

[सामाइयत्थ पढमं, छेओवट्ठावणं भवे बीयं ।
परिहारविसुद्धीयं, सुहुमं तह संपरायं च ॥ ३२ ॥] ॥४८॥

[नत्तो अ अहक्खायं, खायं सव्वंमि जीवलोगंमि ।
जं चरिऊण सुविहिया, वच्चंति अयरामरं ठाणं ॥३३॥]४९

[(अ०) एता अष्टापि व्यावर्णितस्वरूपा इति सुगमाः ॥]

[अणसणमूणोयरिया, वित्तिसंखेवणं रसच्चाओ ।
कायकिलेसो संलीण-या य बज्झो तवो होइ ॥३४॥]॥५०॥

[पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ ।
झाणं उस्सग्गोवि अ, अब्भिंतरओ तवो होइ ॥३५॥]५१

[(अ०) एते व्यावर्णयिष्यमाणस्वरूपे ॥]

[आलोयण १ पडिक्कमणो २-भय ३ विवेग ४ मुसग्गो ५ ।
तव ६ छेय ७ मूल ८ अणव-ट्ठया य ९ पारंचिए १० चेव ॥३६॥] ॥५२॥

[(अ०) आलोचनं १. प्रतिक्रमणं २. उभयं मिश्रं ३, विवेकस्त्यागः ४. उत्सर्गः कायोत्सर्गः ५, तपः ६, छेदः पर्यायांशविनाशः ७, मूलं सर्वपर्यायच्छेदः ८, अनवस्थाप्यता ९, पारांचितं १० चेति दशधा प्रायश्चित्तानि ॥ प्रायश्चित्तभेदानुक्त्वाथ विनयभेदानाह— ]

[भत्ती १ बहुमाणो २ वन्न-जणणं ३ भासणमवन्नवायस्स ४ ।
आसायणपरिहाणी ५. विणओ संखेवओ एसो ॥३७॥]५३

[(अ०) भक्तिर्बाह्यप्रतिपत्तिः १, बहुमानो मानसी प्रीतिः २, वर्णः श्लाघा तत्करणं ३. अवर्णवादस्य निराकरणाय भाषणं प्रतिशब्दनं ४. आशातनापरिहाणिरिति सङ्क्षेपतो विनयः पञ्चधा ॥ ]

[नाणस्स दंसणस्स य, चरणस्स य तह निविहजोगस्स
विणओ लोगुवयारो, सत्तविहो विसयभेएणं ॥३८॥]५४

[ (अ०) पुनः प्रकारान्तरेण विनयभेदानाह—ज्ञानदर्शनचारित्रमनोवचःकायलोकोपचाररूपविषयभेदात्सप्तविधोपि विनयः प्रतिपादितः ॥ ]

[भत्ती तह बहुमाणो, तद्दिट्ठत्थाण सम्मभावणयं ।
विहिगहणब्भासो वि अ, एसो विणओ जिणुद्दिट्ठो ३९]५५

[ (अ०) ज्ञानविनयमाह—ज्ञानज्ञानिनोर्भक्तिबहुमानौ । तद्दृष्टार्थानां सम्यग् भावनं चिन्तनं, विधिर्योगोपधानादिकोनेकप्रकारः, तत्पुरःसरं ज्ञानग्रहणं, अभ्यासः परिचयश्चेति, एवं भक्तिबहुमानभावनग्रहणाभ्यासभेदात् विनयो ज्ञानविनयः पञ्चधा जिनोद्दिष्ट. तीर्थंकरप्रतिपादित इति ॥ ]

[सुस्सूसणा अणासा-यणा य विणओ अ दंसणे दुविहो ।
दंसणगुणाहिएसु, कज्जई सुस्सूसणा विणओ ॥४०॥]५६।

[ ( अ०) दर्शनविनयमाह—दर्शनविनयो मूलतस्तावच्छुश्रूषाऽनाशातनाभेदाद्द्विधा, इदमेवाह–शुश्रूषणाऽनाशातना चेति दर्शनविषयो विनयो द्विभेदः । तत्र शुश्रूषणोचितप्रतिपत्तिसेवनात्मको विनयो दर्शनगुणाधिकेषु विशिष्टसम्यग्दर्शनिषु क्रियत इति भाव. ]

[सक्कारब्भुट्ठाणे, सम्माणासणपरिग्गहे तह य ।
आसण अणुप्पयाणं, किइकम्मं अंजलिगहो अ ॥४१]५७

[ ( अ० ) शुश्रूषाविनयभेदानाह—शुश्रूषाविनयो दशधा, ते चैवं, सत्कारः १, अभ्युत्थानं २, सन्मानः ३, आसनपरिग्रहः ४, तथा च आसनानुप्रदानं ५, कृतिकर्म ६, अञ्जलिग्रह. हस्तयोजनमित्यर्थः ७ ॥ ]

[इंतस्स हिगच्छणया, ठिअस्स तह पज्जुवासणा भणिआ
गच्छंताणुवयणं, एसो सुस्सूसणा विणओ ॥४२॥]५८ ॥

[ ( अ० ) आगच्छतोऽभिगमनं ८. स्थितस्य तथा पर्युपासनं

सेवनम् ९, गच्छतोऽनुव्रजनम् १०, एष दशविधः शुश्रूषाविनयो भणितः । तदासेवनाद्दर्शनशुद्धिः स्थिरता च जायत इत्येष दर्शन विनय उच्यते ॥ ]

[ तित्थयरधम्मआयरिय–वायगे थेरकुलगणे संघे ।
संभोइअ किरियाए, मइनाणाईण य तहेव ॥ ४३ ]॥ ७९॥

[ ( अ० ) अनाशातनाविनयं पञ्चचत्वारिंशद्भेदमाह—तीर्थंकरः १, धर्म २, आचार्यः ३, वाचक उपाध्यायः ४, स्थविरो वयः-पर्यायश्रुतैः ५, कुलमेकाचार्यसन्ततिः ६, गणो मिथःसापेक्षकुलत्रय-समूहः ७, संघः ८, सम्भोगः समानधार्मिकाणां परस्परेण भक्ता-दिदानग्रहणरूप, तद्वान् साम्भोगिकः ८, क्रिया अस्ति परलोकोऽ-स्त्यात्माऽस्ति च सकलक्लेशाकलङ्कितं मुक्तिपदमित्यादिप्ररूपणा-त्मिका १०, मतिज्ञानादीनि पञ्च ज्ञानानि १५, इत्येतानि पञ्चदश-पदानि, तेषाम् ॥ ]

[ आसायणवज्जणया, एएसिं तह य भत्तिबहुमाणो ।
वण्णस्स य संजलणं, होइ अणासायणाविणओ ॥४४] ८०

[ ( अ० ) आशातनवर्जना १, भक्तिबहुमानः, भक्तिर्बाह्या पर्यु-पासना, तन्महितो बहुमान आन्तर प्रीतियोग. २, वर्णसञ्ज्वलनं च सद्भूतगुणकीर्त्तनेन यशोदीपनम् ३, पूर्वोक्तानां पञ्चदशानां आ-शातनवर्जनादित्रितयकरणेन भवन्त्यनाशातनाविनयः पञ्चचत्वा-रिंशद्भेदः ॥ एतेनापि भवति दर्शनशुद्ध्यादिरिति ॥ उक्तो दर्शन-विनयो द्विभेदोऽपि ॥ ]

[ सामाइआइचरणस्स, सद्दहाणं तहेव काएणं ।
संफासणा परूवण—मह पुरओ भवसत्ताणं ॥ ४५ ]॥ ८१॥

[ ( अ० ) चारित्रविनय सामायिकादिचारित्रभेदेन पञ्चधा भणितोऽपि श्रद्धानादिभेदैर्गुणितः पञ्चदशधा. तत्र सामायिकादेः श्रद्धानं रुचि १, कायेन स्पर्शनं पालनम् २, भव्यानां पुरतस्तसद्-गुणवर्णनापुरस्सरं प्ररूपणमिति ३ ॥ ]

[मणवयकाइअविणओ, आयरिआईण सव्वकालंपि ।
अकुसलमणाईरोहो, कुसलाण उदीरणं तह य ॥४६]६२

[ (अ०) सदैवाचार्यादीनां प्रत्यशुभमनआदीनां निरोधः, शुभानां च प्रेरणं, स मनोवचःकायिकविनयः, एते मनोवचःकायविनयाः प्रत्येकं प्रशस्ताप्रशस्तभेदेन द्विभेदा, प्रशस्तस्य प्रवर्तनं निर्जराहेतुः, अप्रशस्तस्य च निवर्तनम् । तावपि प्रत्येकं सप्तभेदौ । प्रशस्तमनोविनयस्य तत्रापापासावद्याक्रियनिरुपक्लेशानाश्रवकराक्षपिकराभूताभिशङ्कनानि भेदाः, तदितरे चाप्रशस्तस्य । एवं वचसोपि द्विभेदस्य । प्रशस्तकायस्य चायुक्तगमनस्थाननिषदनत्वग्वर्तनोल्लंघनप्रलंघनसर्वेन्द्रिययोगयुञ्जनानि । इतरस्य त्वनायुक्तानि ॥]

[अब्भासत्थण छंदोणु–वत्तणं कयसुपडिकई ।
तह य कारिअनिमित्तकरणं, दुक्खत्तगवेसणा तह य॥४७]६३

[ (अ०) लोकोपचारविनयः सप्तधा, तत्राभ्यासासनं गौरवार्हस्य समीपवृत्तिता १, छन्दोऽनुवर्तनं आराध्यस्य छन्दोऽभिप्रायस्तदनुसरणम् २, कृतसुप्रतिकृति विनयात्प्रसादिता गुरवः श्रुतं दास्यन्तीत्यभिप्रायेणाशनादिदानप्रयत्नः ३, कार्यं ज्ञानादि, तन्निमित्तं करणं भक्तादिदानम् ४, दुःखार्तस्य ग्लानीभूतस्य भैषज्यादिना गवेषणं दुःखार्तगवेषणा ५ ॥ ]

[तह देसकालजाणण, सव्वत्थेसु तहाणुकूलत्तं ।
लोगोवयारविणओ, सत्तविहो होइ विण्णेओ ॥४८] ६४

[ (अ०) देशकालज्ञानं अवसरोचितार्थसम्पादनम् ६, सर्वार्थेषु तथानुकूलत्वं आराध्यसम्बन्धिषु सर्वप्रयोजनेष्वप्रातिकूल्यम् ७, एष लोकोपचारविनय सप्तविधो विज्ञेयो भवति ॥ ]

[आयरिय उवज्झाए, थेरतवस्सी गिलाणसेहाणं ।
साहम्मिअ कुलगणसं–घवेआवच्चं हवइ दसहा ॥४९]६५

[ ( अ० ) वैयावृत्त्यभेदानाह—आचार्योपाध्यायौ प्रतीतौ, स्थविरः पूर्वोक्तः, तपस्वी अष्टमादिविकृष्टतपोवान्, ग्लान आर्त्तः, शैक्षो नवदीक्षितः, साधर्मिकः समानाचारवान्, कुलगणसंघाः प्रागुक्ताः, एतेषां दशाना विषयभेदात् वैयावृत्त्यमपि दशधा भवति ॥ ]

[आयरियउवज्झाये, तवस्सिसेहे गिलाणसाहूसु ।
समणुन्नसंघकुलगण–वेयावच्चं हवइ दसहा ॥ ५० ॥] ६६ ॥

[ ( अ० ) एषा शब्दपरावृत्त्या व्याख्यातस्वरुपैव ॥ ]

[वायणा पुच्छणा चेव, तहा य परिअट्टणा ।
अणुप्पेहा धम्मकहा, सज्झाओ होइ पंचहा ॥ ५१ ॥ ]६७

[ ( अ० ) स्वाध्यायभेदानाह—वाचना सूत्रार्थपठनपाठनादि १, पृच्छना सन्दिग्धसूत्रार्थस्य गुर्वादेः प्रश्नः २, परिवर्तना पूर्वपठितसूत्रार्थस्यावर्तनम् ३, अनुप्रेक्षा अर्थचिन्तनम् ४, धर्मकथा धर्मोपदेश इति स्वाध्यायः पञ्चधा भवति ५ ॥ ]

[झाणं चउविहं खलु, अट्टं रुद्दं तहेव धम्मं च ।
सुक्कं पुण पत्तेयं, चउविहं चेव नायव्वं ॥ ५२ ॥] ॥ ६८ ॥

[ ( अ० ) ध्यानं चतुर्विधं, खल्विति निश्चये, आर्तं रौद्रं तथैव धर्म्यं च शुक्लमिति । पुनः प्रत्येकं चतुर्विधमेव ज्ञातव्यम् । लक्षणादीनामपि चतुर्विधत्वं ध्यानशतकादेरवलोक्यम् । आर्तरौद्रयोर्निवृत्तिकरणेन धर्म्यशुक्लयोश्च प्रवर्तनेन निर्जराहेतुत्वमिति ।

[ पढमं अट्टज्झाणं, बीअं रुद्दं इमे भवफलाइं ।
तइअं धम्मं तुरिअं, सुक्कं दो मुक्खहेऊइं ॥५३॥] ॥६९॥

[ ( अ० ) प्रथमं आर्तध्यानं, द्वितीयं रौद्रं, इमे भवफले संसारवर्धने, रागद्वेषमोहात्मकत्वादेतयोरिति । तृतीयं धर्म्यं, तुर्यं शुक्लं द्वे मोक्षहेतू संवरनिर्जरारूपत्वादनयोः ॥ ]

[दव्वे गणदेहोवहि, अइरित्ता सुद्धभत्तपाणाणं ॥
उस्सग्गो भावे अह, कसायभवकम्म उस्सग्गो ॥५४]७०

[ ( अ० ) उत्सर्गस्त्यागः, स च द्विविधः द्रव्यतो भावतश्च । द्रव्यतश्चतुर्धा गणदेहोपध्यतिरिक्ताशुद्धभक्तपानोत्सर्गभेदात् । गणः पूर्वोक्तः, तस्य ज्ञानाद्यर्थं परगणोपसम्पत्तौ त्यागः, जिनकल्पाद्यर्थं वा । देहः सचित्ताचित्तात्मकः, तत्रानाभोगादेः कारणतो वा गृहीतस्य सचित्तदेहस्य, कलेवरस्य चेतरस्य । अनयनेन स्वदेहस्य वा । उपधेर्वस्त्रपात्रादिकस्य । असंनिधिसंचयत्वान्मुनिधर्मस्य दानस्य च साध्यपेक्षयाऽनेकदोषशबलत्वादधिकयोरशुद्धयोरनेषणीयादिदोषयुजोर्भक्तपानयोश्चेति । भावतस्त्रिधा कषायाणां भवस्य कर्मणश्चोत्सर्गस्त्यागः । अभ्यन्तरतपोभेदानां विनयादीनां विशेषतः स्वरूपं भगवतीपञ्चविंशशतकषष्ठोद्देशकादवसेयम् ॥ ]

**बारसविहं तवो नि-ज्जरा य बंधो अ चउविगप्पो य ।**
**पयइ ठिइअणुभाग-प्पएसभेएहिं नायव्वो ॥३७॥ ॥७३॥**

( प्रा० अ० )—'बारस'० द्वादशविधं तपोविधानं निर्ज्जरा स्यात् । "अणसणमूणा०" १ "पायच्छित्तं विण०" । अभ्यन्तरकं मध्यवर्त्ति तपो भवति, अन्तःकरणव्यापारप्राधान्यादन्यतीर्थिकानभ्यस्तत्वात् बाह्यद्रव्यानपेक्षत्वाच्च । अथ बन्धभेदानाह— बन्धश्चतुर्विकल्पश्चतुष्प्रकारः प्रकृतिस्थितिरसप्रदेशबन्धभेदात् । मिथ्यात्वादिभिर्हेतुभिः कर्मयोग्यवर्गणापुद्गलैरात्मनः क्षीरनीरवद्वन्ह्ययःपिण्डवद्वान्योन्यानुगमाभेदात्मकः सम्बन्धो बन्धः । तत्र स्थितिरसप्रदेशरूपाणां बन्धानां यः समुदायः स प्रकृतिबन्धः १ । अध्यवसायविशेषगृहीतस्य कर्मदलिकस्य यत् स्थितिकालनियमनं स स्थितिबन्धः २ । कर्म्मपुद्गलानामेव शुभोऽशुभो वा घात्यघातो वा यो रसः सोऽनुभागबन्धः ३ । कर्म्मपुद्गलानामेव यद् ग्रहणं स्थितिरसानिरपेक्षदलिकसङ्ख्याप्राधान्येनैव करोति स प्रदेशबन्धः ४, । उक्तं च—"प्रकृतिः समुदायः स्यात्, स्थितिः कालावधारणम् । अनुभागो रसो ज्ञेयः, प्रदेशो दलसंचयः ॥ १ ॥" इदं प्रकृत्यादिस्वरूपं मोदकदृष्टान्तेन भाव्यम् । यथा वातविनाशिद्रव्यनिष्पन्नो मोदकः प्रकृत्या वातमुपशमयति, एवं कफपित्तयोरपि भावना कार्या । एवंस्वभावा प्रकृतिः । स्थितिस्तस्यैव कस्यचिद्दिनमेकं, अपरस्य तु दिनद्वयं, एवं कस्यचिन्मासादिकमपि कालं

भवति । रसः पुनः स्निग्धमधुरादिः तस्यैव कस्यचिदेकगुणोऽन्यस्य द्विगुणोऽन्यस्य त्रिगुण इत्यादिकः । प्रदेशाश्च कणिकादिरूपाः कस्यचिदेकप्रसृतिप्रमाणाः । यावदपरस्य सेतिकादिप्रमाणाः । एवं कस्यचित्कर्मणोऽपि ज्ञानाच्छादनस्वभावा, अपरस्य दर्शनावरणरूपादिका प्रकृतिः । स्थितिः कस्यचित् त्रिंशत्सागरकोटीकोटीरूपा, अपरस्य सप्ततिरित्यादि । रस एकस्थानद्विस्थानादिरूपः । प्रदेशा अल्पबहुबहुतरबहुतमादिरूपाः ॥ अथ सत्पदादिभिर्नवभिर्द्वारैः सिद्धप्ररूपणामाह—मोक्षे प्रस्तुते सिद्धप्ररूपणायाः कोऽवसरः ? । उच्यते—जीवस्य कृत्स्नकर्मक्षयेण यत्स्वरूपावस्थानं तन्मोक्ष उच्यते, स च जीवस्यैव धर्मः । धर्मधर्मिणोश्च कथञ्चिदनन्यत्वात्सिद्धप्ररूपणायां मोक्षप्ररूपणेति नाप्रस्तुताभिधानम् ॥

( वृ० )—द्वादशविधा निर्ज्जरा, तत्र उपवासादिकरणं अनशनं १, कवलादिपरिहारेण ऊनोदरिका २, सादिमपरिहारो वृत्ति संक्षेपः ३, विकृत्यादिपरिहाराद्रसत्यागः ४, अनुपानद्गमनलोचादिकारापणात्कायक्लेशः ५, वर्षाकालादौ कूर्मवदङ्गोपाङ्गसङ्कोचकरणात् संलीनता ६, इति षड्विधस्तपः प्रायो बाहुल्येन चित्तं जीवं मनो वा यच्छोधयति,पापं छिनत्तीति वा प्रायश्चित्तं ७, गुरुजनवन्दनेन वैयावृत्त्यादिको विनयः ८, आचार्योपाध्यायतपस्विशिष्यग्लानकुलगणसङ्घसाधुसाधर्मिकेभ्यो वस्त्रपात्राद्युपष्टम्भकरणेन वैयावृत्त्यं ९, वाचनापृच्छनानुप्रेक्षाम्नायधर्म्मोपदेशदानतः स्वाध्यायः १०, आर्त्तरौद्रपरिहारेण धर्मशुक्लध्यानसेवनेन च ध्यानं ११, गमनागमनादिकायव्यापारपरिहारेण कायोत्सर्गः १२, आन्तरं तपः षड्विधमाभ्यन्तरं तपः । एवं द्वादशभिर्भेदैः कर्म्मणां निर्ज्जरा भवतीति प्रथमपादार्थः ॥ निर्जरातत्त्वमुक्त्वाऽष्टमबन्धतत्त्वस्वरूपमाह—अष्टानामपि कर्म्मणां बन्धः प्रकृतिस्थित्यनुभावप्रदेशैश्चतुर्विकल्पो ज्ञातव्यः । तत्र कर्म्मणामष्टपञ्चाशच्छतप्रमाणाः प्रकृतयः स्युः, तद्यथा—ज्ञानावरणे पञ्च ५, दर्शनावरणे ९ नव, वेदनीयद्विकं २,

मोहनीयेऽष्टाविंशतिः २८, आयुष्के चतस्रः ४, नाम्नि त्र्युत्तर शतं १०३, गोत्रे द्वे २, अन्तरायपञ्चकं ५, एवमष्टपञ्चाशच्छतप्रकृतीनां मध्ये काश्चनापि प्रकृतीः प्रत्यहं जीवो बध्नातीति । 'ठिइ'स्थितिः—कालावधारण, जीव एकेन कषायोदयात् कार्यानुक्रमेण कर्मोत्कृष्टां स्थितिं करोति, तथाहि—ज्ञानावरणदर्शनावरण-वेदनीयान्तरायेषु त्रिंशत्सागरकोटाकोटीः; आयुषस्त्रयस्त्रिंशत्सागरोपमानिति । नाम-गोत्रयोर्विंशतिकोटाकोटीः । मोहनीये सप्ततिकोटाकोटीः । जघन्या तु वेदनीये द्वादशमुहूर्त्तान्, नामगोत्रयोरष्टावष्टौ । शेषाणामन्तर्मुहूर्तमिति । 'अणुभागमिति'— अनुभागो रसविपाकः, तत्राशुभप्रकृतीनां घोषातकीनिंबद्वित्रिचतुःस्थानक्वाथवदत्यन्तकटुकविपाकः । शुभप्रकृतीनामिक्षुक्वाथवन्मधुरो विपाको जीवेनानुभूयते । 'पएस'त्ति प्रदेशबन्धस्तु कर्म्मणां दलपाटकं, तत्र तेषां प्रदेशानां वेदनीये सर्वोत्कृष्टो विभागः, यतस्तस्य स्वल्पैः प्रदेशैः प्रकटता न भवति । ततोऽन्येषां कर्म्मणां निजनिजस्थितितारतम्यानुसारेण दलपाटकवृद्धिरिति । बन्ध४श्चतुष्प्रकार इति गाथार्थः॥ बन्धतत्त्वमुक्त्वा नवमं मोक्षतत्त्वमाह—

( सा० अ० ) 'बारसविहं' इति । तत्र बारसविहं इति—गाथामध्यात् पदमेकं ग्राह्यं, द्वादशप्रकारं तपो निर्जरा प्रोच्यते । तत् तपो बाह्याभ्यंतरभेदाभ्यां द्विधा स्यात् । तत्र बाह्यं तपः षड्विधं अनशनो१नोदरता२वृत्तिसंक्षेप३रसत्याग४कायक्लेश५संलीनता६लक्षणं । तत्र अनशनं आहारपरित्यागरूपं द्विधा इत्वरं यावत्कथिकं च । १, इत्वरं चतुर्थषष्ठाष्टमादि, यावत्कथिकं यावज्जीवमनशनग्रहणरूप । ऊनोदरता एकद्वित्र्यादिकवलहान्या ज्ञेया । २, वृत्तिसंक्षेप द्रव्यक्षेत्रकालभावविषयाभिग्रहग्रहणरूप । ३, यथा श्रीमहावीरस्य चतुर्विधाभिग्रहश्चंदनबालया पूरित । रसत्यागो विकृतिपरित्याग । ४,कायक्लेशो लोचादिककष्टसहनं । ५, संलीनता चतुर्विधा इंद्रियकषाययोगनिवारणस्त्र्यादिविवर्जितोपाश्रयनिवसनभेदैर्ज्ञातव्या । ६, एवं बाह्यं तपः षड्विधं लोकप्रसिद्धं व्याख्यातम् । अथ आभ्यंतरं तपः षड्विधं । प्राय-

श्चित्त-१विनय२वैयावृत्त्य३स्वाध्याय४ध्यानो५त्सर्ग६नामकं । तत्र प्रायश्चित्तं निजानि पातकानि यथालग्नानि गुरूणां पुरस्तात् यत् आलोच्यते गुरुप्रदत्तं च तपः समाचर्यते तत् प्रायश्चित्तम् । १, विनयः सप्तप्रकारः ज्ञान१दर्शन२चारित्र३मनो४वचन५काय६लोकोपचारिक७भेदैर्ज्ञातव्यः । २, वैयावृत्त्यं आचार्योपाध्यायतपस्विग्लानादीनां अन्नपानादिसंपादनविश्रामणादिरूपं । ३, स्वाध्यायः वाचना—पृच्छना—परावर्त्तना—नुप्रेक्षा—धर्मकथालक्षणः पंचभेदः । ४, ध्यानं आर्त्तरौद्रधर्मशुक्लरूपं । ५, तत्र आर्त्तरौद्रयोः परिहार, धर्मशुक्लयोः स्वीकारः, एतौ परिहारस्वीकारौ ध्यानं कथ्यते । उत्सर्गो द्रव्यभावभेदाद् द्विधा । तत्र आद्य चतुर्धा गण१देहो२पधि३भक्त४त्यागभेदात्१ । भावतः पुनः क्रोधादिपरित्यागो ज्ञातव्य.२।६, एवं षट्प्रकारं आभ्यंतरं तप; प्ररूपितं । आभ्यंतरं कस्मात्प्रोच्यते । यतो मोक्षप्राप्तौ अंतरंगकारणमिदं ततः आभ्यंतरं कथ्यते । सप्तमं निर्जरातत्त्वं व्याख्यातं । अथ अष्टमं बंधतत्त्वं 'प्ररूपयति'। 'बंधो इति' बंधः कर्मभिः सह जीवानां संश्लेष, यथा क्षीरनीरयो. अग्न्यय पिंडयोर्वा । स चतुर्धा प्रकृति१स्थित्य२नुभाग३प्रदेश४भेदैर्ज्ञातव्यः । एतानेव चतुरो भेदान् व्याख्यानयति । प्रकृति. स्वभाव परिणाम इति भाव. । स्थितिबंधः कालपरिमाणं । अनुभागो रसः कथ्यते । प्रदेशः पुद्गलपरिमाणरूप । एते चत्वारोऽपि भेदा मोदकदृष्टांतेन ज्ञातव्या. । यथा कश्चिन्मोदकः तत्तद्द्रव्यसंयोगनिष्पन्नो वातं पित्तं श्लेष्माणं वा येन स्वरूपेण हंति स स्वभाव कथ्यते । १, यथा पुनः स एव मोदकः पक्षं मासं द्विमासं त्रिमासं चतुर्मासादि यावत् यत्तेनैव रूपेण तिष्ठति सा स्थितिः कथ्यते । २, यथा पुनः स एव मोदक कश्चिन्मधुरो भवति कश्चित्पुन कटुर्भवति कश्चित्तीव्रो भवति यत् स रस कथ्यते । ३, यथा पुन स एव मोदकः कश्चित् अल्पदलपरिमाणनिष्पन्नः कश्चित्पुन. बहुदलनिष्पन्न कश्चिद् बहुतरदलनिष्पन्नः एवं मोदकेषु पुद्गलपरिमाणं स्यात् स प्रदेशः । ४, एवं कर्मणां बंधोऽपि चतुष्प्रकारो ज्ञातव्य. । तथाहि । कानिचित् ज्ञानावरणीयादीनि कर्माणि ज्ञानं दर्शनं चारित्रं वा घ्नंति येन स्वभावेन स 'प्रकृतिबंध.' प्रोच्यते । तान्येव पुनः कर्माणि कानिचित् जघन्यतः

अंतर्मुहूर्तस्थितिकानि भवंति, उत्कृष्टतश्च कानिचित् विंशतिकोटाकोटिसागरोपमप्रमाणस्थितिकानि भवंति। कानिचित् त्रिंशत्कोटाकोटीसागरप्रमाणस्थितिकानि भवंति, कानि पुनः सप्ततिकोट्यकोटीसागरप्रमाणस्थितिकानि भवंति । एवं यावंतं कालं बद्धानि कर्माणि तिष्ठंति स 'स्थितिबंध.' कथ्यते। तथा तेषामेव पुनः कर्मणां केषांचिन्मधुररसः स्यात् केषांचित् कटुकरसः स्यात् केषां पुनस्तीव्ररस. स्यात् स 'रसबंध' कथ्यते। तेषामेव पुनः कर्मणां यत्पुद्गलपरिमाणं भवति स 'प्रदेशबंध.' कथ्यते । यदुक्तं "पगई होइ सहावो, ठिइबंधो होइ कालपरिमाणं । अणुभागो होइ रसो, पएसबंधुत्ति परिमाणं ॥१॥" एवमष्टम बंधतत्त्वं व्याख्यातम् । अथ नवमं मोक्षतत्त्व व्याख्यास्यति ॥

[पयइठिइरसपएसा, तं चउहा मोयगस्स दिट्ठंता ।
मूलपगइट्ठ उत्तर—पगई अडवन्नसयभेयं ॥ ५५ ॥] ॥७२॥

[ ( अ० ) प्रकृतिस्थितिरसप्रदेशानाश्रित्य तत् कर्म चतुर्धा, शेषं स्पष्टं व्याख्यातस्वरूपञ्च ॥ ]

[इहनाणदंसणावरण–वेय मोहाउनामगोयाणि ।
विग्धं च पण नव दु अ–ट्ठवीस चउ तिसय दुपणविहं५६] ७३

[ ( अ० ) सुगमा, कर्मणोऽष्टौ मूलप्रकृतयस्तदुत्तरभेदसंख्या च भणिता इति ॥ ]

[पड१पडिहार२सि३मज्ज४–हड५चित्त६कुलाल७भंडगारीणं ८ ।
जह एएसिं भावा, कम्माण वि जाण तह भावा ५७]७४

[ ( अ० ) पटप्रतिहार्यसिमद्यहडिचित्रकरकुलालभाण्डागारिणां यथैषां भावाः स्वभावा', कर्मणामपि जानीहि तथा भावान्। पटस्याच्छादकत्वं स्वभाव., प्रतिहारिणो निरोधः, असिपदेन मधुलिप्तासिग्रहणम्, तस्य च सुखदुःखदानम, मद्यस्य विह्वलीकरणम्, हडेर्निर्गन्तुमनसोपि प्रतिबन्धकत्वम्, चित्रकरस्य शुभाशु-

भरूपनिष्पादनम्, कुलालस्येष्टानिष्टभाण्डकरणम्, भाण्डागारिणो दानादिकरणप्रवणस्यापि राजादेर्निरोधनम्, एवमेवाष्टकर्मणामपि भावा इति ॥ दृष्टान्तान्प्रतिपाद्य दार्ष्टान्तिकैर्योजयति— ]

[सरउग्गयससिनिम्मल–यरस्स जीवस्स छायणं जमिह।
नाणावरणं कम्मं, पडोवमं होइ एवं तु ॥ ५८ ॥] ॥ ७५ ॥

[ (अ०) शरदुद्गतशशिनिर्मलतरस्य जीवस्य यदिह पटोपमं छादकं तदेवं ज्ञानावरणं कर्म भवति ॥ ]

[दंसणसीले जीवे, दंसणघायं करेइ जं कम्मं ।
तं पडिहारसमाणं, दंसणावरणं भवे जीवे ॥ ५९ ] ॥७६॥

[ ( अ० ) यत्कर्म दर्शनशीलस्य जीवस्य दर्शनाघातं करोति तत्प्रतिहारसमानं जीवस्य दर्शनावरणं कर्म भवति ॥ ]

[महुलित्तनिसिअकरवाल–धार जीहाई जारिसं लिहणं।
तारिसयं वेयणिअं, सुहदुहउप्पायसमुयाणं ॥६०]॥ ७७

[ (अ०) मधुलिप्तनिशितकरवालधाराया जिह्वया यादृशं लेहनं तादृशं सुखदुःखोत्पादनिमित्तं वेदनीयं कर्म भवति ॥ ]

[जह मज्जपाणमूढो, लोए पुरिसो परवसो होइ ।
तह मोहेण विमूढो, जीवो अ परवसो होइ ॥६१॥ ] ७८

[ ( अ० ) यथा मद्यपानमूढः पुरुषो लोके परवशो भवति तथा मोहमूढो जीवस्तत्त्वातत्त्वविचारणायां परवशो भवति ॥ ]

[ दुक्खं न देइ आऊ, नवि अ सुहं देइ चउसु वि गइसु ।
दुक्खसुहाणाहारं, धरेइ देहट्ठिअं जीवं ॥ ६२ ] ॥ ७९ ॥

[ (अ०) आयुष्कर्म दुःखं सुखं वा नैव ददाति, अपि तु सुखदुःखयोराधारं देहस्थितं जीवं तासु तासु चतसृष्वपि गतिषु धारयति]

[जह चित्तयरो निउणो, अणेगरूवाइं कुणइ रूवाइं ।
सोहणमसोहणाइं,न्तु(चु)क्खमन्तु(चु)क्खेहिं वण्णेहिं ६३]८०

[ ( अ० ) यथा निपुणश्चित्रकरो ( चो ) क्षारु( चो ) श्चैर्वर्णैः शोभनाशोभनान्यनेकरूपाण्यनेकाकाराणि रूपाणि करोति ॥ ]

[ तह नामं पि हु कम्मं, अणेगरूवाइ कुणइ जीयस्स।
सोहणमसोहणाइं, इट्ठाणिट्ठाइं लोअस्स ॥ ६४ ॥ ] ॥८१॥

[ ( अ० ) तथा नामापि कर्म लोकस्येष्टानिष्टानि प्रियाप्रियाणि शोभनाशोभनानि च जीवस्यानेकरूपाण्यनेकाकाराणि करोति ॥ ]

[ जह कुंभारो भंडाइं, कुणइ पुज्जेअराइ लोअस्स ।
इअ गोत्तं कुणइ जीअं, लोए पुज्जेअरावत्थं ॥६५॥ ] ।८२।

[ ( अ० ) यथा कुम्भकारः लोकस्य पूज्येतराणि भाण्डानि करोति, इत्येवं गोत्रं कर्मापि लोके पूज्येतरावस्थं जीवं करोति ॥ ]

[ जह राया दाणाइ, न कुणइ भंडारिए विकूलंमि ।
एवं जेणं जीवो, कम्मं तं अंतरायंति ॥ ६६ ॥ ] ॥ ८३ ॥

[ ( अ० ) यथा भाण्डागारिके श्रीगृहिके प्रतिकूले राजा दानादि न करोति, एवं येन कर्मणा जीवोपि दानादि न कर्तुं शक्नोति तत्कर्म अन्तरायमिति भण्यते ॥ ] ( इति प्रकृतिबन्धः )

[ नाणे अ दंसणावरणे, वेअणिए चेव अंतराए य ।
तीसं कोडाकोडी, अयराणं ठिइ य उक्कोसा ॥६७॥ ]८४

[ ( अ० ) ज्ञानावरणदर्शनावरणवेदनीयान्तरायेषु चतसृषु प्रकृतिषु त्रिंशत्कोटाकोटय, अतराणां सागरोपमाणां स्थितिरुत्कृष्टा, सत्ताकाल इत्यर्थः । अबाधान्यूनश्चोदयकाल, केचिदबाधाद्धामतिरिक्तां ब्रुवन्त इति भाव ॥ ]

[ सत्तरि कोडाकोडी, मोहणिए वीस नामगोएसु ।
तित्तीसं अयराइं, आउट्ठिइबंध उक्कोसा ॥ ६८ ॥ ] ॥८५॥

[ ( अ० ) सप्तति कोटाकोट्यो मोहनीये कर्मणि, विंशति–

र्नामगोत्रयोः, त्रयस्त्रिंशदतराणि सागरोपमाणि, उत्कर्षादायुःस्थितिबन्धः ॥ ]

**[ बारस मुहुत्त जहन्ना, वेयणिए अट्ठ नामगोएसु ।
सेसाणंतमुहुत्तं, लहुट्ठिई स नायव्वा ॥ ६९ ॥ ] ॥ ८६ ॥**

[ ( अ० ) उत्कर्षतस्तावदष्टानामपि कर्मणां स्थितयोऽभिहिताः, जघन्यतस्त्वाह—तत्र वेदनीयस्य जघन्या द्वादशमुहूर्ताः, इयं चैर्यापथिकं वेदनीयं विरहय्य, तदाश्रित्य तु प्रथमे बद्धयते द्वितियसमये वेद्यते तृतीये च निर्जीर्यत इति द्विसामायिक्येव स्थितिः। केचिदन्तर्मुहूर्तमपीच्छन्ति। नामगोत्रयोश्च जघन्याऽष्टौ मुहूर्ताः, शेषाणां च ज्ञानावरणीयादीनां पञ्चानामपि अन्तर्मुहूर्तमेव, एषा लघुस्थितिर्ज्ञातव्या ॥ ] ( इति स्थितिबन्धः )

**[ तिव्वो असुहसुहाणं, संकेसविसोहिओ विवज्जयओ ।
मंदरसो गिरिमहिरय-जलरेहासरिसकसाएहिं ॥७०]८७**

[ ( अ० ) स्थितिबन्धस्वरूपमुक्त्वा रसबन्धस्वरूपमाह, तत्ररसस्तावद्द्विविधः अशुभः शुभश्च। आद्योऽशुभानां, शुभः शुभानां। प्रत्येकं स च तीव्रमन्दभेदाद् द्विभेद एकस्थानकादिभेदश्च। अथैतेषां बन्धविधिमाह—'तिव्वो' इत्यादि, तीव्र उत्कटो रसः, अशुभशुभानां संक्लेशविशुद्धितः, अयं भाव, अशुभानां द्व्यशीतेः पापप्रकृतीनां संक्लेशेन तीव्रकषायोदयेन तीव्रो रसो भवति। शुभानां पुनर्द्विचत्वारिंशतः पुण्यप्रकृतीनां विशुद्धया ॥ विपर्ययतो मन्दरसः, अयमर्थः, अशुभानां विशुद्धया मन्दरसः, शुभानान्तु संक्लेशेनेति ॥ अथैकस्थानकादिरसो यैः प्रत्ययैर्भवति तदाह—गिरिरेखामहीरेखारजोरेखाजलरेखासदृशैः कषायैः। अथैतान्प्रत्ययानशुभशुभानुवृत्त्यैकस्थानकादिभिर्योजयन्नाह ॥ ]

**[ चउठाणाई असुहो, सुहन्नहा विग्घदेस आवरणा ।
पुमसंजलणिगदुति चउ-ठाणरसा सेस दुगमाई ॥७१]८८**

[ ( अ० ) चतुःस्थानकादिरशुभः, शुभोऽन्यथा विपर्ययेण।

अयं भाव, अशुभानां प्रकृतीनां गिरिमहीरजोजलराजिसदृशैः कषायैः क्रमशश्चतुस्त्रिद्व्येकस्थानिका रसा भवन्ति। शुभानां पुना रजोजलराजिसदृशैश्चतुःस्थानिक., गिरिमहीराजिसमैस्तु क्रमाद्द्वित्रिस्थानिक', एकस्थानिकस्तु शुभासु नास्त्येव। अथ याश्चतुर्विधस्थानरसा याश्चान्यथा ता आह—विघ्ना पञ्चान्तराया, देशावरणानि मत्यावरणादीनि चत्वारि ज्ञानावरणानि, चक्षुर्दर्शनावरणादीनि त्रीणि दर्शनावरणानि चेति सप्त, पुंवेद, सञ्ज्वलनाश्चत्वार. कषायाः, एता सप्तदश एकद्वित्रिचतु स्थानरसा', शेषा द्विस्थानकादय', अशुभास्वपि सप्तदशवर्जितास्वेकस्थानिको रसो न लभ्यते तथाविधाध्यवसायबद्ध्यमानत्वात् ॥ अथ शुभाशुभरसस्वरूपमुपमानैश्चतुःस्थानकादिकञ्च व्युत्पादयितुकाम आह ॥ ]

[निंबुइच्छुरसो सहजो, दुति चऊभागकढि इक्कभागंतो।
इगठाणाई असुहो, असुहाण सुहो सुहाणं तु ॥७२॥ ]८९

[ ( अ० ) निम्बेक्षुरस कटुर्मधुरश्च, सहजोऽकथित:, द्वित्रिचतुर्भागक्वथितैकभागान्त, एकस्थानकादि, अशुभः अशुभानां, शुभस्तु पुन शुभानां पुण्यप्रकृतीनामित्यक्षरार्थ । अयं भाव, अक्वथित सहजो निम्बरसो यथा कटुस्तद्वदेकस्थानिकोऽशुभरस, अर्द्धक्वथितो यथा कटुतरस्तथा द्विस्थानिक, तृतीयो भागो यथा कटुतमस्तथात्रिस्थानिक, अतिकटुतमचतुर्थभागवच्च चतु.स्थानिक. । एवमिक्षुरसस्यापि भावना, नवरं स शुभरसस्यौपम्यम। विशेषतो रसस्वरूपजिज्ञासुना पञ्चसङ्ग्रहपञ्चमकर्मग्रन्थविवरणादयो विलोक्या. ॥ ] ( इति रसबन्धः )

[ अंतिमचउफासदुगंध—पंचवन्नरसकम्मखंधदलं ।
सव्वजिअणंतगुणरस—मणुजुत्तमणंतयपएसं ॥७३॥ ] ९०

[ ( अ० ) अन्तिमचतु स्पर्श शीतोष्णस्निग्धरूक्षस्पर्शयुतं, बृहच्छतकटीकायां तु मृदुलघुस्पर्शद्वयं सूक्ष्मद्रव्येऽवस्थितमेव, अन्यौ द्वौ शीतस्निग्धौ शीतरूक्षौ उष्णस्निग्धावुष्णरूक्षौ वाऽविरुद्धाविति चतु.स्पर्श । एतेनौदारिकादिदलिकमष्टस्पर्शयुतमेव गृह्यते। द्विगन्धं, पञ्चवर्णं, पञ्चरसञ्च कर्मस्कन्धदलं, किंविधं तदित्याह-सर्व-

जीवानन्तगुणरसाणुयुक्तं, अनन्तप्रदेशं च, तद्गृह्णाति जीव इत्यनेनोत्तरगाथायां सम्बन्धः । अथ कुत्र स्थितं तद् गृह्णातीत्याह— ]

[ एगपएसोगाढं, निअसव्वपएसओ गहेइ जीवो ।
थोवो आउतदंसो, नामे गोए समो अहिओ ॥ ७४ ] ९१

[ ( अ० ) एकप्रदेशावगाढं, अयमर्थः, यथा ह्यग्निः स्वप्रदेशस्यान्योग्यपुद्गलानात्मसाद्विदधाति तथाऽयं जीवो येष्वाकाशप्रदेशेष्ववगाढस्तेष्ववस्थितं यत्कर्मपुद्गलद्रव्यं तद्रागादिगुणयोगादाददाति, नत्वनन्तरपरम्परप्रदेशस्थित, इदमपि निजसर्वप्रदेशतो गृह्णाति सर्वेषामपि जीवप्रदेशानां शृङ्खलावयववत्परस्परसम्बद्धत्वात् । अथैकाध्यवसायगृहीतकर्मद्रव्यस्य यावन्मात्रो भागो यस्मिन्कर्मणि निक्षिपति तदाह—'थोवो०' अष्टविधबन्धकस्य चित्रगर्भैकाध्यवसायगृहीतकर्मदलिकस्याष्टौ भागा, सप्तविधबन्धकस्य सप्त, षड्विधबन्धकस्य षट्, एकबन्धकस्यैक इति । तत्रायुषि स्तोक कर्मांशः, अयं भाव, शेषकर्मस्थित्यपेक्षयाऽऽयुषोऽल्पस्थितिकत्वात्तत्राल्पं भागं क्षिपति । तदपेक्षया नामगोत्रयोरधिक परस्परं च सम, स्थितेरायुरपेक्षयाऽधिकत्वान्मिथश्च समत्वात् ॥ ]

[ विग्घावरणे मोहे, सव्वोवरि वेअणीइ जेणप्पे ।
तस्स फुडत्तं न हवइ, ठिईविसेसेण सेसाणं॥७५॥ ] ९२॥

[ ( अ० ) नामकर्मभागापेक्षया विघ्नावरणेषु मोहनीये वेदनीये च क्रमशोऽधिकाधिको भाग, वेदनीयस्याल्पस्थितिकत्वेपि सर्वोपरिभागे हेतुमाह. येन अल्पे वेदनीयभागे सति तस्य वेदनीयस्य सुखदुःखवेद्यतया स्फुटत्वं न भवति । अयमर्थ, वेदनीयपुद्गलाः प्रचुरा एव सन्तः सुखदुःखस्वरूपं स्वकार्यं व्यक्तीकर्तुं प्रभवन्ति, शेषकर्मपुद्गलास्तु स्वल्पा अपि । वेदनीयमृते शेषाणां स्थितिविशेषेण स्थितिमानतम्येन भागहीनाधिक्यं वाच्यमिति । अचिन्त्यत्वाज्जीवशक्तेर्विचित्रत्वाच पुद्गलपरिणतेरेकसमयगृहीतस्य कर्मदलिकस्याष्टधाभागतारतम्येन विभजने नारका दिनायेति । अथोत्तरप्रकृतीनां भागप्ररूपणामाह— ]

**[ निअजाइलद्धदलिआ—णंतंसो होइ सव्वघाईणं ।**
**बज्झंतीण विभज्जइ, सेसं सेसाण पइसमयं ॥७९॥ ] ९३**

[ ( अ० ) निजजातिलब्धदलिकानन्तांशः केवलावृत्यादीनां सर्वघातिनीनां कर्मप्रकृतीनां भवति, शेषं सर्वघात्यनन्तभागावशिष्टं प्रदेशाग्रं शेषाणां देशघात्यादीनां बध्यमानानां प्रतिसमयं विभज्यते। अयंभावः, ज्ञानावरणस्य पञ्चोत्तरप्रकृतयस्तत्र केवलज्ञानावरणं सर्वघातिनी प्रकृतिः, शेषा देशघातिन्यः, तत्र ज्ञानावरणीये यद्दलिकमायाति तदनन्ततमो भागः सर्वघातिरसयुक्तः केवलज्ञानावरणे क्षिपति, शेषं च विभज्य शेषासु, एवं सर्वत्र, आयुषस्त्वेकस्यैव बध्यमानत्वात्सर्वोपि भागस्तत्र बध्यमान एवायाति ॥ ] ( इति प्रदेशबन्धः ) ( इति बन्धतत्त्वम् ८ )

**संतपयपरूवणया, दव्वपमाणं च खित्त फुसणा य ।**
**कालो य अंतर भाग, भावे अप्पाबहुं चेव ॥ १८ ॥ ९४॥**

( प्रा० अ० ) 'संत'० सत्ताभिधायकं पदं सत्पदम्, तस्य प्ररूपणं निरूपणं सत्पदप्ररूपणं, सत्पदप्ररूपणमेव सत्पदप्ररूपणता। गत्यादिमार्गणास्थानेषु सिद्धानां सत्तानिरूपणं कार्यम् १,। सिद्धद्रव्याणां प्रमितिः कार्या २,। क्षेत्रमित्यनुस्वारो गाथानुलोम्यान्नोक्तः, क्षेत्रमाकाशं तच्च प्रस्तावात् सिद्धानामवगाहरूपम्, ३, । स्पर्शनं स्पर्शना सिद्धानां वाच्या ४,। क्षेत्रस्पर्शनयोर्विशेषोऽयं, यदवगाढं तत् क्षेत्रं, यदनवगाढमपि स्पृष्टं सा स्पर्शनेति, । यथैकदेशावगाढस्य परमाणोः सप्तप्रदेशा स्पर्शना। उक्तं च- "जं दव्वं जेसु पएसेसु ओगाढं तावइआ पएसा खित्तं, जं पुण तं चेव दव्वं तस्स चेव खेत्तस्स छसु दिसासु एगं एगं आगासप्पएसपयरं सव्वओ समंतादहिअं परिप्फुसइ सा फुसणत्ति ॥" ४, कालः सिद्धानां साद्यनन्तरूपः कथ्यः। ५, अन्तरमुत्पत्तिमाश्रित्य सिद्धानां वाच्यम् ६,। भागः शेषजीवानां कतितमे भागे सिद्धाः ७। भावः क्षायिकादिः, तन्मध्ये कस्मिन्—भावे सिद्धाः ८,। अल्पबहुत्वं सिद्धानां वाच्यम् ९। एतानि नव द्वाराणि पर्वसूरिव्याख्यानगाथाभिर्व्याख्याति

( वृ० ) सत्पदप्ररूपणा १, द्रव्यप्रमाणं २, क्षेत्रप्रमाणं ३,

स्पर्शना ४, कालः ५, अन्तरं ६, भागः ७, भावः ८, अल्पाबहुत्वं ९ चेति द्वारगाथार्थः ॥ सत्पदप्ररूपणामाह—

( सा० अ० ) 'संतपय'० इति मोक्षतत्त्वस्य नव भेदा भवन्ति। ते च एवं ज्ञातव्याः। सत्पदप्ररूपणा १, द्रव्यप्रमाणं २, क्षेत्रप्रमाणं ३, स्पर्शना ४, कालः ५, अंतरं ६, भागः ७, भाव. ८, अल्पबहुत्वं ९, । अथ एतेषां नवानां मोक्षतत्त्वभेदानां स्वरूपं प्ररूपयति।

**संतं सुद्धपयत्ता, विज्जंतं खकुसुमं व न असंतं ।**
**मुक्खत्ति पयं तस्स उ, परूवणा मग्गणाईहिं ॥२९॥९५॥**

( प्रा० अ० ) 'संतं सुद्धपयत्ता विज्जंतं०' मोक्षइति पदमस्ति स्तद्विद्यमानं, शुद्धपदत्वात्, केवलपदत्वात्, एकपदादित्यर्थः, यद्यदेकपदं नाम तत्तद्विद्यमानमेव, यथाऽऽकाशं, पुष्पमित्यादि. अशुद्धपदं नु द्विपदादिकं सदसद्वा भवति, यथा सत्कूपजलं धवखदिरपलाशाः । असत् खरविषाणम् । तथा मोक्षपदमसन्न खकुसुममिव । तस्य तु निरूपणा चतुर्दशमार्गणास्थानैः कार्या। आदिशब्दात् द्रव्यप्रमाणस्थानादिभिश्च । अथ प्रत्युपन्ननयमाश्रित्य मार्गणास्थानानि भावयन्नाह—

( वृ० )—सन् विद्यमानो मोक्षः, शुद्धपदत्वात्, शुद्धपदत्वमेकपदवाच्यत्वम्, किमुच्यते?, विभक्त्यन्तं पदं तत्सद्रूपवक्तृकं यथा घटः, अत्र पञ्चावयवं वाक्यम्, अस्ति मोक्षः,१ शुद्धपदवाच्यत्वात् २। यच्छुद्धपदवाच्यं तदस्ति यथा घटः३। तथा चायं,४. तस्मादस्ति च मोक्षः५। एतावता ये मोक्षपदं न मन्यन्ते तद्व्यवच्छेदः । यच्च शुद्धपदवाच्यं न स्यात्, पदद्वयसम्बन्धवाच्यं स्यात् तदसदपि स्यात्। अत्रार्थे दृष्टान्तमाह—खकुसुमं पुनरसत्, यत् शुद्धपदवाच्यं न भवति, तत्सदपि न भवति । यथाऽऽकाशकुसुममतोऽन्यन्मोक्षपदमिति पदसिद्धिः। अस्य मोक्षपदस्य प्ररूपणा वक्तव्यता । गतीन्द्रियकायोगवेदकषायज्ञानसंयमदर्शनलेश्याभव्यसम्यक्त्वसंज्ञ्याहाररूपैर्मार्ग-

णस्थानैर्ज्ञेयेति गाथार्थः ॥ एतेषां मार्गणास्थानानां मध्ये यानि मोक्षगतौ सम्भवन्ति तान्येवाह–

(सा० अ०) 'संतं सुद्ध'० इति—संतमिति सद् विद्यमानं, मोक्ष इति पदं मोक्ष इति नाम, कस्माद्धेतोः। शुद्धपदत्वात् असंयुक्तपदत्वात् एकपदत्वादित्यर्थः। खकुसुमवत् आकाशपुष्पवत्, 'न असंतं' न असत् अविद्यमानं। अयं भावः, सकलेऽपि जगति यस्य यस्य पदार्थस्य एकपदं नाम भवति स स पदार्थ अस्त्येव, यथा घटपटलकुटादि। एवं मोक्षस्यापि मोक्षइति एकपदं नाम, अत कारणात् मोक्षोस्त्येव। न पुनः आकाशकुसुमवन्नास्ति। आकाशकुसुमस्य एकपदं नाम नास्ति किंतु द्विपदं नामास्ति। यत् यत् वस्तु द्विपदनामवाच्यं भवति तत् तत् एकांतेन विद्यमानं न भवति। किंतु किंचित् गोशृंगमहिषशृंगादिवत् विद्यमानं, किंचित् पुन खरशृंगाश्वशृंगाकाशकुसुमादिवत् अविद्यमानं। मोक्षइति पदं पुन एकपदत्वात् अस्त्येव। अनेन अनुमानप्रमाणेन मोक्षो विद्यमानोऽस्ति इति सिद्ध्यति। तत्र मोक्षस्य सत्पदरूपस्य, प्ररूपणा विचारणा, गत्यादिमार्गणाद्वारा या विधीयते सा सत्पदप्ररूपणा, एतामेव प्ररूपयति ॥

गइ१ इंदिय२ काये ३, जोए ४ वेए५ कसाय६ नाणे अ ७।
संजम ८ दंसण९ लेसा १०, भव ११ सम्मे १२ सन्नि १३
आहारे १४ ॥२०॥९६॥

(प्रा० अ०) पञ्चसु गतिषु सिद्धिगतावेव सिद्धा सन्ति १, इन्द्रियद्वारेणैकेन्द्रियादिपञ्चेन्द्रियान्तेषु सिद्धत्वं नास्ति। सर्वथा शरीरपरित्यागेनैव सिद्धत्वपर्यायोत्पत्ते। उक्तं च–"इहं बोंदी चइत्ताणं, तत्थ गतूण सिज्झइ।" अत एवानिन्द्रिया सिद्धा। २.'कायद्वारे' कायः शरीर तद्योगात् षड्जीवनिकाया, एषु सिद्धपदं न, तद्विपक्षाकायरूपत्वात् सिद्धानां "असरीरा जीवघणा" इति प्रामाण्यात्। ३,'योगद्वारे' योगस्त्रिधा, तत्रैकेन्द्रियाणां केवलः काययोगः, कायवाग्योगौ तु समुदितौ द्वीन्द्रियाद्यसंज्ञिपञ्चेन्द्रियान्तानां, कायवाङ्मनोयोगाः संज्ञिपञ्चेन्द्रियपर्याप्तानामेव, एषु सिद्धसत्ता ना-

स्ति, अयोगित्वात् सिद्धानाम्, अयोगित्वं च शरीराद्यभावात्तेषाम् ।४, 'वेदद्वारे' त्रिविधेऽपि सिद्धपदं न । तद्विपक्षावेदस्वभावत्वात्, अवेदत्वं चाशरीरत्वादिति ।५, एवं कषायेऽपि सिद्धासम्भवः, अकषायत्वात्सिद्धानां, अकषायत्वं चाकर्मत्वात् । ६, 'ज्ञानद्वारे' आद्येषु चतुर्षु त्रिष्वज्ञानेषु च सिद्धत्वं न, तेषां क्षायोपशमिकत्वात्, केवलज्ञानेऽस्ति, तस्य क्षायिकत्वात् । ७, 'संयमद्वारे' संयमश्चारित्रं, तच्च सामायिकच्छेदोपस्थापनीयाद्यं देशसंयमासंयमौ च, एषु न सिद्धपदं, तेषां शरीरादिभावे भावात्, सिद्धानां च तद्विपरीतत्वात् । अत एव "सिद्धो नो चारित्ती नो अचारित्तीति" व्यवपदिश्यते ।८, 'दर्शनद्वारे' दर्शनानि चत्वारि चक्षुरादीनि, एषामाद्यत्रिके न सिद्धाः, केवलदर्शने तु केवलज्ञानवच्चिन्तेति । ९, 'लेश्या' कृष्णनीलकापोततेजःपद्मशुक्लाः, षट्स्वपि सिद्धपदाभावः, भवस्थजीवपर्यायत्वात्तासां, अलेश्यत्वं च सिद्धानामिति । १०, 'भवद्वारे' भवसिद्धिका अभव्याः तत्र सिद्धपदं न । यत, 'सिद्धे नो भव्वे नो अभव्वे' इत्याप्तवचनम् । ११, 'सम्यक्त्वद्वारे' तानि पञ्च क्षायिकक्षायोपशमिकौपशमिकसास्वादनवेदकभेदात् । तद्विपक्षस्तु मिथ्यात्वमिश्रौ । क्षायिकवर्जितेष्वेषु पट्सु न सिद्धत्वं, क्षायोपशमिकादिभाववर्त्तित्वात् तेषाम । क्षायिकसम्यक्त्वे त्वस्ति । यतस्तद् द्विविधं शुद्धमशुद्धं च, तत्र शुद्धं अपायसद्द्रव्यरहितं भवस्थकेवलिनां सिद्धानां च, शुद्धजीवस्वरूपं साधनन्तं, अशुद्धं चापायसहचारि श्रेणिकादेरेव सादिसान्तं, तत्राशुद्धक्षायिकेऽपि न सिद्धसत्ता, तस्यापायसहचारित्वेन भवस्थकाल एव भावात् । शुद्धक्षायिकसम्यक्त्वे त्वस्ति, तस्य सिद्धावस्थायामप्यप्रतिघातात् । अपायस्य मतिज्ञानांशस्य सद्द्रव्याणां च शुद्धसम्यक्त्वदलिकानामभाव एव तस्य भावादिति तात्पर्यम् । १२, 'संज्ञिद्वारे' संज्ञा यद्यपि त्रिधा हेतुवादोपदेशिकी दीर्घकालिकी दृष्टिवादोपदेशिकी चेति, तथाऽपि रूढतया दीर्घकालिक्येव ग्राह्या, संज्ञिन इदं कृतमिदं करोमीदं करिष्यामीतित्रिकालविषयमनोज्ञानवन्तः, तद्विपरीतास्त्वसंज्ञिनः, द्वयेऽपि न सिद्धपदं, 'सिद्धो नो सन्नी नो असन्नीति' वचनात् । १३, 'आहारकद्वारे' आहारस्त्रिधौजोलोमप्रक्षेपाहारभेदात्, स विद्यते येषां ते आहारकाः । न तेषु सिद्धत्वं भवस्थानामेव तद्भावात् । अनाहारके

त्वस्ति 'सिद्धा य अणाहारा' इति वचनात् ।१४,तदेवं सम्भवासम्भवकथनपरेण चतुर्दशस्वपि गत्यादिमार्गणास्थानेषु कृता सत्पदप्ररूपणा । अथ पूर्वपर्यायसारनयालम्बनेन तामाह—

**नरगइपणिंदि तस भव, सन्निअहक्खाय खइयसम्मत्ते ।**
**मुक्खोणहार केवल–दंसणनाणे न सेसेसु ॥ २२ ॥ ९६ ॥**

( प्रा० अ० ) 'नर०' चरमभवान्ते शैलेश्यवस्थायामतीतनयमाश्रित्य नरगतिपञ्चेन्द्रियादावेव मोक्ष इति सिद्धपदं विलोकनीयम्, न तिर्यग्गत्येकेन्द्रियादिषु, यत एषु स्थिता न सिद्ध्यन्तीति । 'न सेसेसु'त्ति न शेषेषु योगलेश्यावेदकषायमार्गणास्थानेषु सिद्धसत्ता । यतः शैलेश्यवस्थाया अर्वाक्क्षिप्तत्वात्तेषाम् । अथ सिद्धानां द्रव्यप्रमाणमाह—

( वृ० )—नरगतिः, 'पणिंदि' पंचेन्द्रियजातिः, त्रसभव्यसंज्ञियथाख्यातचारित्रं क्षायिकसम्यक्त्वं तथा अनाहारकेवलज्ञानकेवलदर्शनानि, मार्गणस्थानेभ्य एतेषु मोक्षः संभवति, न शेषेष्वेतेभ्योऽवशिष्यमाणेषु मार्गणास्थानेषु मोक्ष इति गाथार्थः । सत्पदस्वरूपमुक्त्वा द्वितीयं द्रव्यप्रमाणं गाथार्धेनाह—

( सा० अ० ) 'नरगइ इति'—गतिः ४ नरकगतिः तिर्यग्गतिः मनुष्यगतिः देवगति, तत्र मनुष्यगतौ मोक्षो भवति न शेषगतित्रयेऽपि । १, इंद्रियमार्गणास्थानं पंचधा एकेंद्रियादिभेदात् ज्ञातव्यं, तत्र पंचेंद्रियद्वारे मोक्षो भवति एकेंद्रियादिचतुष्टये न भवति। २, कायमार्गणास्थानं षड्विधं पृथ्वीकायाप्कायतेजस्कायवायुकायवनस्पतिकायत्रसकायभेदैर्ज्ञातव्यं । तत्र त्रसकायवर्त्तिनो जीवा योग्यतायां मोक्षं यांति, शेषपंचकायस्था जीवा मोक्षं न यांति। ३, भवसिद्धिकमार्गणास्थानं द्विधा । ४, भवसिद्धिका अभवसिद्धिकाश्च । तत्र भवसिद्धिकाः भव्या एतद्विपरीता अभवसिद्धिकाः । तत्र भवसिद्धिका मोक्षं यांति अभवसिद्धिका स्तु न सिद्ध्यंति ।४,संज्ञिमार्गणास्थानं द्विधा संज्ञिनः असंज्ञिनश्च । तत्र संज्ञिनां मोक्षो भवति न असंज्ञिनां ।५,चारित्रमार्गणास्थानं पंचधा ।

६, सामायिकचारित्रं १, छेदोपस्थानीयं २, परिहारविशुद्धिकं ३, सूक्ष्मसंपरायं ४, यथाख्यातचारित्रं ५, तत्र श्राद्धसाधूनां सामायिकं द्वेधा देशसामायिकं च सर्वसामायिकं । तत्र देशसामायिकं श्रावकाणां भवति । सर्वसामायिकं यावज्जीवं सर्वसावद्यव्यापारनिषेधरूपं । इदं सर्वतीर्थवर्त्तिसाधूनां । १, द्वितीयं छेदोपस्थापनीयं तच्च प्रथमचरमतीर्थंकरतीर्थवर्त्तिसाधूनां पूर्वपर्यायच्छेदेन पंचमहाव्रतेषु उपस्थापनरूपं । २, तृतीयं परिहारविशुद्धिकं, तत् नव साधूनां समुदायेऽष्टादशमासान् यावत्तपोविशेषरूपं, पश्चात् जिनकल्पं प्रतिपद्यते स्थरविरकल्पिकं वा । ३, चतुर्थं सूक्ष्मसंपरायं ईषन्मात्रसंज्वलनलोभाणुमात्रोदयरूपं दशमगुणस्थानवर्तिसाधूनां भवति । ४, पंचमं यथाख्यातं सर्वमोहनीयाष्टाविंशतिप्रकृतीनां षोडशकषायनवनोकषायमिथ्यात्वमिश्रसम्यक्त्वत्रिपुंजरूपाणां उदयाभावाद् भवति । ५, तत्र यथाख्यातचारित्रेण मोक्षो भवति न शेषचतुर्ष्वपि त्रिषु । ६,सम्यक्त्वमार्गणास्थानं पंचधा । औपशमिकं १ सास्वादनं २ क्षायोपशमिकं ३ वेदकं ४ क्षायिकं ५ । तत्र औपशमिकसम्यक्त्वलाभः एवं स्यात् । ज्ञानावरणीय–दर्शनावरणीय–वेदनीयान्तरायकर्मणां त्रिंशत्कोटाकोटीसागरोपमस्थितिप्रमाणानां एकोनत्रिंशत्कोटाकोटीसागरोपमस्थितेः क्षये मोहनीयकर्मणः सप्ततिकोटाकोटीसागरोपमस्थितिकस्य एकोनसप्ततिकोटाकोटीसागरोपमस्थितेः क्षयात् नामगोत्रयोर्विंशतिकोटाकोटीसागरोपमप्रमाणयोरेकोनविंशतिकोटाकोटीसागरोपमस्थितेः क्षयात् तेषां एकैककोटाकोटीसागरोपमस्थितिमध्यप्रविष्टानां यथाप्रवृत्तिकरणेन निबिडरागद्वेषपरिणामरूपो दुर्भेदो यो ग्रंथिदेशस्तं प्राप्तो जीवः अपूर्वकरणेन ग्रंथिदेशं भिनत्ति, समयं समयं प्रति अनंतविशुद्ध्या विशुद्ध्यमानो जीवः तत्र अंतरकरणेन मिथ्यात्वस्थितेरेककोटाकोटिसागरोपमस्थितिप्रमाणायाः स्थितिद्वयं करोति । प्रथमा स्थितिः आन्तर्मुहूर्तिकी द्वितीया तदूना शेषस्थितिः । प्रथमस्थितौ प्रतिसमयं मिथ्यात्वपुद्गलाननुभवनेन क्षीणायां सत्यां अंतरकरणस्य आद्यसमय एव औपशमिकसम्यक्त्वं लभते जीवः । १, तत् अपौद्गलिकं इदं अंतर्मुहूर्तकालं यावद्भवति । या द्वितीया स्थितिः मिथ्यात्वस्य तस्या नव पुंजत्रयं करोति शुद्धं अर्द्धविशुद्धं अशुद्धं च । यथा कोद्रवाणां गोमयपानीयादिभिः उत्तारितमदनभावानां शुद्धपुंजः ।

अर्द्धोत्तारितमदनानां अर्द्धशुद्धपुंजः। अनुत्तारितमदनानां अशुद्धः पुंजः एवं मिथ्यात्वदलिकस्यापि क्षपितमिथ्यात्वानुभावस्य यः पुंजः स शुद्धः क्षायोपशमिकसम्यक्त्वरूपः कथ्यते । यः अर्द्धशुद्धपुंजः स मिश्रः कथ्यते । योऽशुद्धपुंजस्तन्मिथ्यात्वं । तत्र औपशमिकसम्यक्त्वकालस्य जघन्यतः एकसमयशेषे उत्कृष्टतः षडावलिकाशेषे अनंतानुबंध्युदयो भवति । येन औपशमिकसम्यक्त्वं कलुषीभवति। तदा सम्यक्त्ववमनकाले सास्वादनं भवति । २, पूर्वोक्तपुंजत्रयमध्ये यदा शुद्धपुंजोदयस्तदा क्षायोपशमिकसम्यक्त्वं भवति।३,मिथ्यात्वमिश्रलक्षणपुञ्जद्वयक्षये सति तृतीयस्य क्षयकालस्य चरमसमये वेदकसम्यक्त्वं भवति ।४, क्रोधमानमायालोभानां अनंतानुबंधिनां चतुर्णां क्षये मिथ्यात्वमिश्रपौद्गलिकसम्यक्त्वरूपपुंजत्रयक्षये क्षायिकं सम्यक्त्वं लभते जीवः तदपि अपौद्गलिकं । ५,तत्र क्षायिकसम्यक्त्वे भवति मोक्ष , न शेषसम्यक्त्वचतुष्टये।७, अनाहारमार्गणास्थानं द्विधा आहारकानाहारकभेदात् । तत्र अनाहारकस्य मोक्षो भवति, न आहारकस्य । ८, ज्ञानमार्गणास्थानं पंचधा मतिज्ञान१श्रुतज्ञाना२वधिज्ञान३मनःपर्यवज्ञान४केवलज्ञान५भेदात् । तत्र केवलज्ञाने मोक्षो भवति, न शेषज्ञानचतुष्टये। ९, दर्शनमार्गणास्थानं चतुर्द्धा चक्षुर्दर्शना१चक्षुर्दर्शना२वधिदर्शन३केवलदर्शन४ भेदात् । तत्र केवलदर्शने मोक्षो भवति, न शेषदर्शनत्रयेऽपि । १०, इति सत्पदप्ररूपणाद्वारं व्याख्यातं । १,अथातः परं द्रव्यप्रमाणं कथ्यते ।

दव्वपमाणे सिद्धाण, जीवदव्वाणि हुंतणंताणि ।
लोगस्स असंखिज्जे, भागे एगो अ सव्व वि ॥ २२ ॥ ९८॥

(प्रा० अ०) 'दव्व'० सिद्धद्रव्यप्रमाणे चिन्त्यमाने जीवद्रव्याणि भवन्ति अनन्तानि । अभव्येभ्योऽनन्तगुणाः । सर्वजीवानामनन्तभाग इत्यर्थः ।२,लोकस्यासङ्ख्येयभाग एकः सर्वे वाऽवगाढाः । यद्यपि चेदमुक्तं तथापि सर्वावगाहचिन्तायां बृहत्तमोऽसङ्ख्यभागः, एकावगाहे लघुतम इति । असङ्ख्यातराशेरसङ्ख्यातभेदभिन्नत्वादुभयत्राप्यसङ्ख्यातत्वं न विरुद्धं ॥३,

( वृ० ) द्रव्यप्रमाणे जीवसङ्ख्यायां क्रियमाणायां सिद्धानामष्टकर्मरहितानां जीवद्रव्याण्यनन्तानि भवन्ति । सिद्धानामानन्त्या-

दिति गाथाप्रथमपादार्थः ॥ २,द्रव्यप्रमाणमुक्त्वा तृतीयं क्षेत्रस्वरूपं गाथोत्तरार्द्धेनाह— चतुर्द्दशरज्ज्वात्मकलोकस्यासङ्ख्यांशे क्षेत्रे एकः सिद्धः, न केवलमेकः सिद्धः, सर्वेऽपि सिद्धाः । ३, यतोऽसङ्ख्यातस्य तारतम्येनासङ्ख्यभेदत्वात्, इति गाथार्थः ॥ क्षेत्रस्वरूपमुक्त्वा चतुर्थं स्पर्शनाद्वारं गाथाप्रथमपादार्धेनाह—

( सा० अ० ) 'दव्व० इति' द्रव्यप्रमाणद्वारे चिंत्यमाने सिद्धानां जीवद्रव्याणि अनंतानि भवंति । इति द्रव्यप्रमाणद्वारं समाप्तं । २,क्षेत्रद्वारे चिंत्यमाने लोकाकाशस्य असंख्येयतमे भागे एकः सिद्धो वर्त्तते । सर्वे वा सिद्धा लोकाकाशस्य असंख्येयतमे भागे वर्त्तंते । परं एकसिद्धव्याप्तक्षेत्रापेक्षया सर्वसिद्धव्याप्तक्षेत्रमधिकप्रमाणं । इति क्षेत्रद्वारं समाप्तम् । ३,अथ स्पर्शनादि द्वारत्रयं कथ्यते ।

फुसणा अहिआ कालो, इगसिद्धपडुच्च साइओणंतो ।
पडिवायाभावाओ, सिद्धाणं अंतरं नत्थि ॥ २३ ॥ ९९ ॥

( सा० अ० ) 'फुस०' क्षेत्रावगाहतः स्पर्शनाधिका भवति । अयमर्थ, यावति क्षेत्रे सर्वे सिद्धा अवगाढा एको वा सिद्धोऽवगाढस्तावतः क्षेत्रस्य येऽनन्तराः सर्वे दिक्षु प्रदेशास्ते तैः स्पृश्यन्त इति तावती क्षेत्रस्पर्शनेति । ४,'काल' एकसिद्धं प्रतीत्य सादिनंतः, सर्वसिद्धापेक्षया त्वनन्तोऽनादिश्चाभणितोऽपि स्वयमभ्यूह्य ।५,प्रतिपाताभावात्सिद्धानामन्तरं च्यवनस्य नास्ति । उत्पातमाश्रित्यान्तरमस्ति । यथा जघन्यतः एकः समयः, उत्कर्षतः षण्मासाः ॥

( वृ० ) यावदेकेन सिद्धेन सिद्धिक्षेत्रं व्याप्तं तदनन्तैः सिद्धैर्व्याप्तं, यदुक्तमागमे— "जत्थ एगो सिद्धो, तत्थ अणंता सिद्धा" इति पादार्थः॥ स्पर्शनास्वरूपमुक्त्वा पञ्चमं कालद्वारस्वरूपं गाथाप्रथमार्द्धेनाह—'अत्थाकालो,इगसिद्धमपेक्खि साइओणंतो ॥'अतीतादिकः कालः एकसिद्धापेक्षया सादिनन्तः । यथा—भगवान् श्रीमद्वा-

वारः सिद्धः सादिस्ततश्चयवनाभावादनन्तं कालं यावत्तत्रावस्थानादिति साद्यनन्तता, सर्वसिद्धापेक्षया अनाद्यनन्तश्च, पूर्वमनन्ता अनादिकालं यावत्सिद्धाः ततस्तेषां च्यवनाभावादनन्तता। इति सर्वसिद्धापेक्षया अनाद्यनन्ता, इति गाथाद्यार्द्धाऽर्थः ॥ कालद्वारमुक्त्वा षष्ठमन्तरद्वारं गाथोत्तरार्द्धेनाह– 'पडिवायाभावाओ, सिद्धाणं अंतरं नत्थि ॥' प्रतिपाताभावाच्चयवनाभावात्, सिद्धानामन्तरं नास्ति। सर्वेऽपि समाना इति गाथार्थः। अन्तरद्वारमुक्त्वा सप्तमं भागद्वारं गाथापूर्वार्द्धेनाह—

(भा० अ०) 'फुसणा इति' क्षेत्रात् स्पर्शना अधिका। यथा एकस्मिन् आकाशप्रदेशे स्थितस्य परमाणो सप्ताकाशप्रदेशस्य स्पर्शना भवति। एवं सिद्धानामपि क्षेत्रात् स्पर्शना अधिका भवति ॥ एवं स्पर्शनाद्वारं व्याख्यातं ॥ अथ कालद्वारं व्याख्यायते। एकं सिद्धं प्रतीत्य आश्रित्य कालः सादिः अनंतश्च वर्त्तते। सर्वसिद्धानाश्रित्य कालः अनादि अनंतः। यत्र ये केचन सिद्धाः यदा सिद्धा स्तदा तेषां आदिः, तदनु प्रतिपाताभावात् अंतो न भवति ॥ एवं कालद्वारं व्याख्यातं ॥ अथ अंतरद्वारं कथ्यते ॥ प्रतिपातस्य अभावात् सिद्धानां अंतरं नास्ति। यत· अंतरं तदुच्यते यत् तं भावं प्राप्य पुनरन्यत्र गत्वा पुनरपि स एव भाव· प्राप्यते। एवंविधं अंतरं सिद्धानां नास्ति। प्रतिपाताभावात्। एवं अंतरद्वारं समाप्तम् ॥ अथ भागादिद्वारं लिख्यते—

सव्वजिआणमणंते, भागे ते तेसिं दंसणं नाणं।
खइए भावे परिणा–मिए अ पुण होइ जीवत्तं॥२४॥१००॥

(प्रा० अ०) 'सव्व०' अभव्येभ्योऽनन्तगुणा अपि सर्वजीवानामनन्ततमे भागे ते सिद्धाः स्यु ॥ 'भावद्वारे' क्षायिकपारिणामिकयोर्भावयो सिद्धा भवन्ति। विशेषचिन्तायां तेषु सिद्धेषु पुनर्ज्ञानं दर्शनं च क्षायिके भावे वर्त्तते, जीवत्वं पारिणामिके भावे च। अयं भावः, क्षायिको भावो नवधा– दानलाभभोगोपभोगवीर्यस्वरूपलब्धिपञ्चकं चारित्रसम्यक्त्वे केवलज्ञानदर्शने च, आद्या सप्त भेदा मोक्षेऽसम्भविन, केवलज्ञानदर्शनभेदौ सम्भविनौ

गृहीतौ स्तः । पारिणामिकस्त्रिधा भव्याभव्यत्वजीवत्वानि । भव्याभव्यन्यरूपौ सिद्धासम्भविनौ भेदौ । जीवत्वं भवति । एषामनाद्यनन्तः पारिणामिको भावः । इत्थमेव सदापरिणामित्वात् । न जीवोऽजीवत्वं, अजीवो जीवत्वं वा परिणमति । एवं भव्याभव्ययोर्भावना कार्या । अथाल्पबहुत्वद्वारमाह— ॥

( वृ० ) तेषां सिद्धानां ज्ञानं दर्शनं च सर्वेषां जीवानामनन्ततमे भागे विद्यते । 'नो चे जीवोऽजीवत्तणं पाविज्जइ 'त्ति । अतः केवलज्ञानस्यानन्ततमो भागो निगोदेष्वाप्यत इति । तदभावे तेषामजीवता स्यात् ॥ इति गाथाप्रथमार्द्धार्थः ॥ भागद्वारमुक्त्वाऽष्टमं भावद्वारमाह— औपशमिक१क्षायिक२क्षायोपशमिकौ३दयिक४पारिणामिक५सान्निपातिकरूपाः षड्भावाः ६ । तत्र कषायाणामुपशमादौपशमिकं सम्यक्त्वं, किञ्चित्क्षयेण किञ्चिदुपशमाच्च क्षायोपशमिक सम्यक्त्वं भवति । एकभवगतित्यागाद् द्वितीयगतिगमनोदयेन औदयिको भावः । स च चातुर्गतिकभवभ्रमणैः सम्भवति । एकस्माद्भवाद्भवान्तरगमनेन पारिणामिको भावः । उक्तं च— "परिणामो ह्यर्थान्तर—गमनं न च सर्वथा व्यवस्थानम् । न च सर्वथा विनाशः, परिणामस्तद्विदामिष्टः" ॥ १ ॥ इति । द्विकत्रिकचतुष्कपञ्चकभावयोगात् सान्निपातिको भावः । इत्येतेषां भावानां मध्यात् क्षायिकं सम्यक्त्वं सिद्धेषु सम्भवति । अतः क्षायिके भावे पारिणामिके च भावे वर्त्तमानानां सिद्धानां पुनर्जीवत्वं भवति । एतदभावे तेषामजीवतापत्तेरिति गाथोत्तरार्द्धार्थः ॥ भावद्वारमुक्त्वा नवममल्पबहुत्वस्वरूपमाह—

( भा० अ० ) 'भव्वजियाण इवि' सर्वजीवानां अनंतनमे भागे वर्तंते सर्वेऽपि सिद्धाः ॥ एवं भागद्वारं समाप्तं ॥ अथ भावद्वारं लिख्यते ॥ तेषु सिद्धेषु केवलज्ञानं केवलदर्शनं च क्षायिके भावे वर्तंते । पारिणामिके च भावे जीवितत्वं वर्तते ॥ एवं भावद्वारं समाप्तं ॥ अथ अल्पबहुत्वद्वारं लिख्यते ॥

**थोवा नपुंससिद्धा, थीनरसिद्धा कमेण संखगुणा ।**
**इअ मुक्खतत्तमेअं, नवतत्ता लेसओ भणिआ ( वुत्ता )**
**॥ २५ ॥ १०१**

( प्रा० अ० ) 'थोवा०' नपुंसकसिद्धाः स्तोकाः, ततः स्त्री-सिद्धाः सङ्ख्येयगुणाः, ततो नरसिद्धाः संख्येयगुणा इति ॥

**( वृ० ) नपुंसकसिद्धाः सर्वस्तोकाः ।** ननु नपुंसका मिथ्या-दृशः, अतः कथं तेषां सिद्धत्वं ? उच्यते— ये स्वभावनपुंसकास्तेषां न सिद्धत्वं, किन्तु ये पश्चान्नपुंसकीकृता भवन्ति तेषां सिद्धत्वं जा-यते इति । तेभ्यो नपुंसकसिद्धेभ्यः स्त्रीसिद्धाः सङ्ख्यातगुणाः, तेभ्यः स्त्रीसिद्धेभ्यः पुरुषसिद्धाः सङ्ख्यातगुणा इति ॥ मोक्षतत्त्वमे-तत् ॥ इति नवापि जीवादीनि तत्त्वानि, लेशतः सङ्क्षेपतः उक्तानि कथितानीति गाथार्थः ॥ पुंस्त्वं प्राकृतत्वान्न दोषाय ॥ एतेषु नवसु तत्त्वेषु ज्ञातेषु किं स्यादित्याह—

( सा० अ० ) 'थोवा इति'—मोक्षगमनभवे नपुंसकत्वं अनु-भूय ये सिद्धाः ते स्तोकाः जन्मनपुंसकानां चारित्रमपि न भवति कुतो मोक्षगमनं । एते नपुंसका ये पश्चात् वर्द्धितादिविशेषेण कृतास्ते ज्ञेयाः । नपुंसकसिद्धेभ्यः स्त्रीवेदमनुभूय ये सिद्धास्ते संख्यातगुणाः । स्त्रीसिद्धेभ्योऽपि ये पुरुषवेदमनुभूय सिद्धास्ते संख्यातगुणाः ॥ इति अल्पबहुत्वद्वारं समाप्तम् ॥ एतावता ग्रंथेन संतपयपरूवणयेत्यादिगाथा सकलापि व्याख्याता ज्ञेया ॥ इति मोक्षतत्त्वमेतद् ज्ञातव्यम् ॥ मोक्षतत्त्वभणनेन नवतत्त्वानि लेशतो भणितानि ज्ञातव्यानि ॥ अथ नवतत्त्वपरिज्ञानफलमाह ॥

**जीवाइनवपयत्थे, जो जाणइ तस्स होइ सम्मत्तं ।**
**भावेण सद्दहंते, अयाणमाणे वि सम्मत्तं ॥ २६ ॥ १०२ ॥**

( प्रा० अ० ) 'जीवा०' स्पष्ट ॥

**( वृ० ) जीवादिनवपदार्थान् यो जानाति** सम्यगवगच्छति । तस्य देहिनः सम्यक्त्वं 'अर्हन् देवः साधुर्गुरुर्जिनप्रणीतो धर्मः' इति-लक्षणं भवति । तदभावात् सर्वा अपि क्रियाः निष्कारणा निष-

शंकाः, उक्तं च– "भट्ठेण चरित्ताउ, । सुट्ठयरं दंसणं गहीयव्वं । सिज्झंति चरणरहिया, दंसणरहिया न सिज्झंति" ॥ १ ॥ भावेन च मनोवाक्कायैन, तत्सम्यक्त्वं श्रद्दधतोऽजानानस्यापि अर्थात्तत्त्वानि 'एसम एस परमट्ठे सेसे अणट्ठे' इति श्रद्दधतः सम्यक्त्वं भवतीति गाथार्थः ॥ तस्यैव सम्यक्त्वस्य निश्चलतास्वरूपमाह—

( सा० अ० ) 'जीवाइ इति' जीवादिनवपदार्थान् यो जानाति श्रद्धत्ते च तस्य भवति सम्यक्त्वं । भावेन "तमेव सच्चं नीसंकं जं जिणेहिं पवेईयं" इत्यादि शुभात्मपरिणामरूपेण श्रद्दधति कोऽर्थः श्रद्धानं कुर्वति । 'अजानन्', जीवादीन्नव पदार्थानजानन्नपि । कोऽर्थ. । जीवादिपदार्थज्ञानरहितेऽपि जीवे सम्यक्त्वं भवति ॥ अथ सम्यक्त्वस्वरूपं कथयति ॥

सव्वाइं जिणेसरभा–सियाइं वयणाइं नन्नहा हुंति ।
इअ बुद्धी जस्स मणे, सम्मत्तं निच्चलं तस्स ॥ २७ ॥ १०३ ॥

( प्रा० अ० ) 'सव्वा०' सुगमा ॥

(वृ०) सर्वाणि साङ्गोपाङ्गानि, जिनेश्वरभाषितानि वचनानि, नान्यथा भवन्ति, किन्तु यथार्थानि स्युः । इति यस्य भव्यस्य नरस्य चित्ते बुद्धिर्भवति, तस्य सम्यक्त्वं निश्चलम् । देवासुरनरयक्षैरपि तस्य सम्यक्त्वं न चालयितुं शक्यते इति गाथार्थः ॥ तस्मिन् सम्यक्त्वे प्राप्ते के गुणा इत्याह—

( सा० अ० ) 'सव्वाइ इति' सर्वाणि जिनेश्वरभाषितानि वचनानि न अन्यथा भवंति । इति बुद्धिर्यस्य मनसि सम्यक्त्वं निश्चलं तस्य भवति । अथ सम्यक्त्वफलमाह ॥

अंतो मुहुत्तमित्तं पि, फासियं जेहिं हुज्ज सम्मत्तं ।
तेसिं अवड्ढपुग्गल–परिअट्टो चेव संसारो ॥ २८ ॥ १०४ ॥

( सा० अ० ) 'अंतो०' अपगतमर्द्धं यस्मादसावपार्द्धः, अपार्द्धश्चासौ पुद्गलपरावर्त्तश्च अपार्द्धपुद्गलपरावर्त्तः । "लोगागासपएसा [illegible] परणेण इत्य जीवेण । पुट्ठा कमुक्कमेणं, खित्तपरट्टो

भवे थूलो ॥ १ ॥ जीवो जइया एगे, खित्तपएसम्मि संठिए मरइ। पुणरवि तस्साणंतर–बीअपएसम्मि जइ मरइ ॥ २ ॥ एवमणंतर-मरणेण, सव्वे खित्तम्मि जइ मओ होइ । सुहुमो खित्तपरट्टो, अणुक्कमेणं नणु गणिज्जा ॥ ३ ॥" अत्र क्षेत्रप्रदेशाननुक्रमेणैव प्रथमप्र-देशानुबद्धप्रदेशपरम्परापरिपाट्यैव गणयेत्। न पुन एवंस्पृष्टाद् व्यवहितान् प्रदेशान् गणयेत् ॥ इयमत्र भावना ॥ यद्यपि जीवस्या-वगाहना जघन्यतोऽपि असङ्ख्यातप्रदेशात्मिका । तथापि विव-क्षिते कस्मिंश्चित्प्रदेशे म्रियमाणस्य विवक्षितः कश्चिदेकः प्रदेशो-ऽवधिरूपो विवक्ष्यते । तस्मात् प्रदेशादन्यत्र प्रदेशान्तरे ये नभः-प्रदेशा मरणेन व्याप्ता भवन्ति ते न गण्यन्ते, किन्त्वनन्तेऽपि काले गते विवक्षितात्प्रदेशादनन्तरो यः प्रदेशो मरणेन व्याप्तः स गण्यते । इदमत्र सूक्ष्मक्षेत्रपुद्गलपरावर्त्तार्द्धं गृह्यते ॥

॥ चिरन्तनाचार्यप्रणीता नवतत्त्वाचूर्णिः समाप्ता ॥

( वृ० ) अन्तर्मुहूर्त्तमात्रमपि घटिकाद्वयमपि यैर्विवेकिभिर्जीवैः स्वसारसम्यक्त्वं स्पृष्टं स्यात्, तेषां जीवानामपार्द्धपुद्गलपरावर्त्त एव संसारो भवति । कोऽर्थः, चतुर्दशरज्ज्वात्मकलोकाकाशप्रदे-शानां मध्ये ( यं ) एकं प्रदेशं जीवो मरणेन क्षणं स्पृशति, स लेख्ये गण्यते। ततो यदा पुनस्तस्मादेकप्रदेशादनन्तरं द्वितीयं प्रदेशं मरणेन स्पृशति। सोऽपि तदा लेख्यके गण्यते । अन्तरालभवाश्च न लेख्यके गण्यन्ते । एवं क्रमेण (यदा) तृतीयादिप्रदेशादारभ्य सर्वलोकप्रदेशान् स्पृशति तदा सूक्ष्मक्षेत्रपुद्गलपरावर्त्तः ॥ एवंस्वरूपश्च पुद्गलप-र्तः ॥ एवंस्वरूपस्य पुद्गलपरावर्त्तस्यार्द्धं ततोऽप्यप किञ्चिन्न्यूनो-ऽर्द्धपुद्गलो भवति । एतावत्कालमध्येऽवश्यं मुक्तयङ्गनास्तनतटलु-ठनपरः स्यादिति गाथार्थः ॥

॥ तपागच्छाधिपतिश्रीदेवेन्द्रसूरिविनिर्मिता नवतत्त्ववृत्तिः समाप्ता ॥

( सा० अ० ) 'अंतोमुहुत्त-इति' अंतर्मुहूर्तमपि कालं यैः सम्यक्त्वं स्पृष्टं भवति। तेषां अपार्द्धः अपगतः अर्धो यस्मात्सः अपार्धः अर्द्धपुद्गलपरावर्तरूपः संसारो भवति । आशातनाबहुलानामपि न अधिकः संसारः स्यात् । शुद्धसम्यक्त्वाराधनेन केचन तेनैव भवेन सिद्ध्यंति, केचन द्वितीये तृतीये वा, सप्ताष्टभवान्नातिक्रमंति, किंतु सिद्धत्वं शीघ्रं प्राप्नुवन्ति ॥

[दव्वे१ खित्ते २ काले३, भावे४ चउह दुह बायरो सुहुमो ॥
होइ अणंतुस्सप्पिणी–परिमाणो पुग्गलपरियट्टो॥७७]१०५॥

[पुग्गलपरिअट्टो इह, दव्वाइचउव्विहो मुणेअव्वो ।
थूलेअरभेएहिं, जह होइ तह निसामेह ॥ ७८ ॥ ] ॥१०६

[ ( अ० ) द्रव्यविषयः, क्षेत्रविषयः, कालविषयः, भावविषयश्चेति चतुर्धा पुद्गलपरावर्तः, पुनः प्रत्येकं द्विधा बादरः स्थूलः, सूक्ष्मश्च । सामान्यतश्चायं पुद्गलपरावर्तः अनन्तोत्सर्पिणीकालपरिमाणो भवति । अयमेवार्थः प्रतिशब्दगाथयाऽऽह—पुद्गलपरावर्त इह द्रव्यादिचतुर्विधो ज्ञातव्यः स्थूलेतरभेदाभ्यां, यथा स भवति तथा निशामयत शृणुत ॥ ]

[उरालविउव्वातेअ–कम्मभासाणुपाणमणएहिं ।
फासेवि सव्वपुग्गल, मुक्का दव्वबायरपरट्टो ॥७९॥] १०७

[ ( अ० ) औदारिकवैक्रियतैजसकार्मणभाषानप्राणमनोभिस्तद्योग्यसप्तवर्गणाभिः स्पृष्ट्वा सर्वपुद्गला मुक्ता यावता कालेन स द्रव्यबादरपरावर्तः । आहारकवर्गणाया ग्रहणसद्भावेऽपि आहारकशरीरस्यामवजुत्कर्षतश्चतुर्वारमेव ग्रहणात्तद्भावेन सर्वपुद्गलानां स्वीकारोत्सर्जनाभावादौदारिकादिवर्गणासप्तकग्रहणम् ॥ ]

[अह सत्तगेणं, एग जिओ मुअइ कुणिअ सव्वअणू ।
तत्तिअकालि स थूलो, दव्वे सुहुमो सगन्नयरा ॥८०॥]१०८

[ ( अ० ) औदारिकादिसप्तकेन औदारिकादियोग्यवर्गणासप्तकभावेन, मतान्तरेण औदारिकाद्यंगचतुष्कभावेन, चतुर्दशरज्ज्वात्मकसमस्तलोकवर्तिसर्वपुद्गलस्पर्शनगोचरे यावता कालेन स बादरः द्रव्यविषयः, सप्तानां मतान्तरेण चतुर्णां मध्यादन्यत-

मेनैकेन केनचित्सर्वपुद्गलस्पर्शनमोचनेन शेषस्पृष्टानामगणनेन सूक्ष्मः द्रव्यपुद्गलपरावर्तः ॥ ]

[ दव्वे सुहुमपरट्टो, जाहे एगेण अह सरीरेण ।
फासेति सव्वपुग्गल–अणुक्कमेणं नणु गणिज्जा॥८१ ]१०९

[ ( अ० ) द्रव्यविषयः सूक्ष्मपरावर्तः यदा एकेनौदारिकाद्यन्यतमेनाथ शरीरेण सर्वपुद्गलान् स्पृशति अनुक्रमेण ननु गणयेत् । अयं भावः । आहारकशरीरस्याभवं चतुर्वारमेवोपलब्धेस्तद्विरहय्य चतुर्णामन्यतमेन शरीरेण मतान्तरेण सप्तानामौदारिकादीनामन्यतमेन सर्वान् पुद्गलाननुक्रमशः परिणमय्य स्पृशति तदा द्रव्यसूक्ष्मपुद्गलपरावर्तो भवति ॥ ]

[ लोगागासपएसा, जया मरंतेण इत्थ जीवेण ।
पुट्ठा कमुक्कमेणं, खित्तपरट्टो भवे थूलो ॥ ८२ ॥ ]॥ ११०॥

[ ( अ० ) अत्रैकेन जीवेन म्रियमाणेन सर्वलोकाकाशप्रदेशाः क्रमोत्क्रमाभ्या यावता कालेन स्पृष्टा भवन्ति तावान्कालविशेषः स्थूलो बादरः क्षेत्रपरावर्तो भवति ॥ ]

[ जीवो जइआ एगे, खित्तपएसम्मि संठिओ मरइ ।
पुणरवि तस्साणंतर—बीअपएसम्मि जइ मरइ ॥८३]१११

[ एवमणंतरमरणेण, सव्वखित्तंमि जइ मओ होइ ।
सुहुमो खित्तपरट्टो, अणुक्कमेणं नणु गणिज्जा ॥८४ ]११२

[ ( अ० ) यदा जीव एकस्मिन्नाकाशप्रदेशे संस्थितो म्रियते, पुनरपि तस्यानन्तरद्वितीयप्रदेशे यदि म्रियते, एवमनन्तरमरणेन सर्वक्षेत्रे यदि मृतो भवति, तदा सूक्ष्मः क्षेत्रपरावर्तः, अनुक्रमेण ननु गणयेत् ॥ अयमर्थः ॥ अनन्तभवभ्रमणशीलो जन्तुर्यदाऽनन्तरेषु निरन्तरेषु वाऽन्यान्याकाशप्रदेशेषु म्रियमाणः चतुर्दशरज्ज्वात्मकान्सर्वानपि नभःप्रदेशान्स्पृशति तदा बादरः क्षेत्रपरावर्तो भवति । अत्रापूर्वस्पृष्टा गण्यन्ते पूर्वस्पृष्टास्तु न । अथ च विवक्षित एकस्मिन्प्रदेशे मृतस्ततस्तदव्यवहिते प्रदेशे यदि म्रियते स प्रदेशो गणनामायाति पुनरव्यवहिते तृतीये इत्यादिक्रमेण मरणेन सर्वे लोकाभ्रप्रदेशा यदि स्पृश्यन्ते तदा सूक्ष्मो भवति। यद्यपि जीवस्यैकाकाशप्रदेशावगाहाभावस्तथाप्ययमधीकृत एकः कश्चिन्म्रियमाणो इति भावः ॥]

[उस्सप्पिणीइ समया, जावइआ ते अ निअयमरणेणं ।
पुट्ठा कम्मुक्कमेणं, कालपरट्टो भवे थूलो ॥ ८५ ॥] ॥ ११३ ॥

[ ( अ० ) एवमुत्सर्पिण्या यावन्तः समयास्ते क्रमोत्क्रमेण निजमरणेन स्पृष्टाः, स स्थूलः कालपरावर्तो भवति । उत्सर्पिण्या उपलक्षणार्थत्वादवसर्पिण्यपि ग्राह्येति पूर्णं कालचक्रं दृश्यम् ]

[सुहुमो पुण उस्सप्पिणि—पढमे समयंमि जइ मओ होइ ।
पुणरवि तस्साणंतर—बीए समयंमि जइ मरइ ॥८६] ११४

[ ( अ० ) सूक्ष्मः पुनरुत्सर्पिणीप्रथमे समये यदि मृतो भवति पुनरपि तस्यानन्तरे द्वितीये समये यदि म्रियते तदा भवति ॥ ]

[एवमणंतरमरणेण, सव्वसमएसु चेव एएसु ।
जइ कुणइ पाणचायं, अणुक्कमेणं नणु गणिज्जा ॥८७]११५

[ ( अ० ) एवमनन्तरमरणेन सर्वसमयेष्वेवैतेषु यदि करोति प्राणत्यागमनुक्रमेण ननु गणयेत् ॥अयं भावः, कालचक्रस्य विंशतिकोटाकोटिसागरमितस्य सर्वसमयैर्निरनुक्रम मरणस्पृष्टैर्बादरः कालपरावर्तः । प्रथमं यदा कदाचित्कालचक्रप्रथमसमये मृतः स गण्यते, ततस्तस्य द्वितीयसमये यदा म्रियते स गण्यते, मध्यभाविनो मरणसमया लेख्यके न गण्यन्ते । एवं मरणस्पृष्टाः कालचक्रसर्वसमया यावता कालेन, भवन्ति स सूक्ष्मः कालपरावर्तः ॥ ]

[एगसमयम्मि लोए, सुहुमगणिजीएसु जे उ पविसंति ।
ते हुंतसंखलोग—प्पएस तुल्ला असंखिज्जा ॥८८॥]॥११६॥

[ ( अ० ) पूर्वं तावत्प्रवचनसारोद्धाराद्यभिप्रायेण सूक्ष्मबादरभावपुद्गलपरावर्तनिरूपणायोपक्रमते । लोके ये पृथ्व्यादयो जीवा एकसमये सूक्ष्माग्निजीवेषु प्रविशन्ति ते प्रमाणतोऽसंख्यलोकप्रदेशतुल्या असंख्येया भवन्ति, अत्राग्निजीवा येऽग्निकायिकेषु तस्मिन्समये प्रविशन्ति ते न गण्याः, पूर्वप्रविष्टत्वात्तेषाम ॥ ]

[तत्तो असंखगुणिआ, अगणिकायाओ तेसिं कायठिई ।
तत्तो संजमअणुभाग – बंधठाणाणमंखाणि ॥८९]११७

[ ( अ० ) ततोऽसंख्यगुणिता अग्निकायाः पूर्वप्रविष्टाः, जघन्यतोऽप्येतेऽनन्तर्मुहूर्तस्थितिकाः. अनुक्षणं चासंख्येया उत्पद्यन्ते ततस्ते-

षां कायस्थितिरसंख्येयगुणिता एकैकस्याग्निजीवस्योत्कर्षतोऽसंख्येय-कालचक्रप्रमाणत्वात्। ततः संयमस्थानान्यनुभागबन्धस्थानानि चासंख्यगुणितानि, यतो ह्येकैकस्यां कायस्थितावसंख्येयाः स्थितिबन्धाः, जघन्यतोऽपि प्रथमाऽन्तर्मुहूर्तप्रमिता, ततो द्वितीया समयाधिका, यावदसंख्येयानि कालचक्राणि। एकैकस्मिंश्च स्थितिबन्धेऽसंख्येयान्यनुभागबन्धस्थानानि। तत्स्वरूपं चान्यत्र प्रपञ्चितमिति तत एवावसेयम्।]

[ताणि मरंतेण जया, पुट्ठाणि कमुक्कमेण सव्वाणि ।
भावेण बायरो सो, सुहुमो जं कमेण बोद्धव्वो ॥९० ]११८

[ ( अ० ) अथैतानि सर्वाण्यनुभागबन्धस्थानानि क्रमोत्क्रमाभ्यां म्रियमाणेनैकजीवेन यदा यावता कालेन स्पृष्टानि तावान्स कालः भावेन भावापेक्षया बादरः परावर्तः। क्रमेण क्रमस्पर्शापेक्षया बोद्धव्यः सूक्ष्मः भावपुद्गलपरावर्तः ॥ ]

[लोगपएसोसप्पिणि-समया अणुभागबंधठाणा य ।
जह तह कममरणेणं, पुट्ठा खित्ताइ थूलियरा ॥९१ ]११९

[ ( अ० ) लोकप्रदेशाः, अवसर्पिणीत्युपलक्षणादुत्सर्पिण्यप्यवसेया, तत कालचक्रसमयाः, अनुभागबन्धस्थानानि च, एतानि यथातथा मरणेन स्पृष्टान्याश्रित्य क्षेत्रादयः स्थूलाः, क्रममरणेन च सूक्ष्माः परावर्ताः ॥ ]

[उस्सप्पिणी अणंता, पुग्गलपरिअट्टओ मुणेयव्वो ॥
तेणंता तीअद्धा, अणागयद्धा अणंतगुणा ॥९२॥] ॥१२०॥

[ ( अ० ) सामान्यतः पुद्गलपरावर्तः अनन्तोत्सर्पिण्यवसर्पिणीकालप्रमितो ज्ञातव्यः, तेचानन्ता अतीतकालः, अनागतस्त्वनन्तगुण ॥ ]

[जिणअजिणतित्थतित्था, गिहिअन्नसलिंगथीनरनपुंसा।
पत्तेय सयंबुद्धा, बुद्धबोहिक्कणिक्काय ॥ ९३ ॥] ॥ १२१ ॥

( सा० अ० ) 'जिण'—इति तीर्थंकराः संतो ये सिद्धाः ते तीर्थंकरसिद्धाः। अतीर्थंकरसिद्धाः सामान्यकेवलिनः। अतीर्थसिद्धाः भगवतीमरुदेव्यादिवत । स्वलिंगे रजोहरणादिरूपे व्यवस्थिताः संतो ये सिद्धास्ते स्वलिंगसिद्धाः। तथा अन्यलिंगे परि-

व्राजकादिसंबंधिनि वल्कलचीर्यादिवत् अन्यलिंगे सिद्धाः ते अन्यलिंगसिद्धाः । यदा अन्यलिंगिनो भावतः सम्यक्त्वादिप्रतिपन्ना केवलज्ञानं प्रतिपद्यंते तदान्यलिंगत्वं द्रष्टव्यं अन्यथा यदि दीर्घमायुष्कमात्मनः पश्यंति ज्ञानेन ततः साधुलिंगमेव प्रतिपद्यंते । तथा स्त्रिया लिंगं स्त्रीलिंगं शरीरनिर्वृतिः, वेदे सति सिद्धत्वभावात्, तस्मिन् स्त्रीलिंगे वर्त्तमानाः संतो ये सिद्धाः प्रत्येकबुद्धवर्जिताः केचित् **स्त्रीलिंगसिद्धाः** । तथा पुरुषलिंगे शरीरनिर्वृतिरूपे व्यवस्थिताः संतो ये सिद्धाः ते **पुरुषलिंगसिद्धाः** । तथा नपुंसकलिंगे वर्त्तमानाः सतो ये सिद्धास्ते **नपुंसकलिंगसिद्धाः** । गृहस्थाः संतो- ये सिद्धास्ते **गृहस्थसिद्धाः** भरतादयः। प्रत्येकं किंचिद् वृषभादिकं अनित्यतादिभावनाकारणं वस्तु बुद्ध्वा बुद्धवंतः परमार्थमिति प्रत्येकबुद्धाः संतो ये सिद्धाः ते **प्रत्येकबुद्धाः** । तथा एकैकसमये एकैका एव संतो ये सिद्धास्ते एकसिद्धाः। एकसमये ऋषभादिवदष्टोत्तरशतस्य सेधनादनेकसिद्धाः । बुद्धा आचार्याः तैर्बोधिता ये सिद्धाः ते बुद्धबोधितसिद्धा । इति पंचदशभेदाः ॥

**श्री साधुरत्नसूरिविरचिता नवतत्त्वाचूर्णिः समाप्ता ॥**



॥ १६४४ माघशु०११रविवारे सूर्यपुरे लिखिता ॥



[ ( अ० ) सिद्धा अनन्तरपरम्परभेदाभ्यां द्विविधाः, परम्परसिद्धास्त्वनन्तभेदाः, अनन्तरसिद्धान्पञ्चदशभेदैराह, ते च जिनसिद्धा इत्यादि व्यक्तम् ॥ ]

**[जिणसिद्धा अरिहंता, अजिणसिद्धा य पुंडरियपमुहा ।**
**गणहारितित्थसिद्धा, अतित्थसिद्धा य मरुदेवी॥९४]१२२**

[ ( अ० ) अथैतान् पञ्चदशापि सिद्धभेदान्निदर्शनैः शिष्यान् ग्राहयितुकाम आह— 'जिनसिद्धा' इत्यादि जिनसिद्धाः तीर्थं स्थापयित्वा सिद्धिपदं प्राप्ताः, ते च अर्हन्तस्तीर्थविधातारो नाभिभूप्रभृतयः, अजिनसिद्धाश्च सामान्यकेवलिनः, पुण्डरीकप्रमुखाः गणधारिणस्तीर्थसिद्धाः, मरुदेव्यादयः अतीर्थसिद्धाः ॥ ]

[गिहिलिंगसिद्धभरहो, वक्कलचीरी य अन्नलिंगम्मि ।
साहू सलिंगसिद्धा, थीसिद्धा चंदणापमुहा ॥९५]॥१२३॥

[ (अ०) गृहिलिङ्गसिद्धो भरतः, वल्कलचीरी चान्यलिङ्गे; साधुः स्वलिङ्गसिद्धः, चन्दनबालाप्रमुखाश्च स्त्रीसिद्धाः ॥ ]

[पुंसिद्धा गोयमाई, गांगेयाई नपुंसया सिद्धा ।
पत्तेयसयंबुद्धा, भणिया करकंडुकविलाई ॥९६॥ ]॥१२४॥

[ (अ०) पुंसिद्धाः गौतमादयः, गाङ्गेयो भीष्मस्तदादयः नपुंसकाः सिद्धाः, प्रत्येकस्वयंबुद्धाःभणिताः क्रमेण करकण्डुकपिलादयः ॥ ]

[तह बुद्धबोहिगुरुबो- हिया इगसमय एगसिद्धा य ।
इगसमए वि अणेगा, सिद्धा तेणेगसिद्धा य ॥९७] ॥१२५

[(अ०) तथा ये गुरुबोधितास्ते इह बुद्धबोधिताः, एकस्मिन् समये एकका ये सिद्धास्ते एकसिद्धा; ये चानेककास्तेऽनेकसिद्धाइति॥]

[जइआइ होइ पुच्छा, जिणाण मग्गंमि उत्तरं तइया ।
इक्कस्स निगोयस्स, अणंतभागो य सिद्धिगओ॥९८]१२६

[ (अ०) यदा यदा भवति पृच्छा, जिनानां मार्गे, उत्तरं, तदा तदा एकस्य निगोदस्यानन्ततमो भागः सिद्धिं गतः ॥ ]

[लोए असंखजोयण- माणे पइजोयणमंगुलसंखा ।
पइ तं असंखअंसा, पइ अंसमसंखया गोला ॥९९]॥१२७

[ (अ०) अस्मिंश्चतुर्दशरज्ज्वात्मके लोके योजनविचारणाऽसंख्येयानि योजनानि भवन्ति, प्रतियोजनं अंगुलानि ७६८००० संख्यानि भवन्ति । प्रत्यङ्गुलं चासङ्ख्येया अंशा भागाः, यद्यपि अनन्ता अपि ते द्रव्यरूपाङ्गुलस्य भवन्ति, तथापि, गोलकादिविचारणायाः प्रकृतत्वान्नानन्ततमे भागे तदवगाह इत्यसंख्यग्रहणं, क्षेत्रप्रदेशानां च तत्रासङ्ख्यत्वात् प्रत्यंशं चासंख्येया गोलकाः ॥ ]

[गोलो असंखनिगोओ, सोणंतजिओ जिअं पइ पएसा ।
असंखे पइपएसे, कम्माणं वग्गणाणंता ॥१००॥]॥ १२८॥

[ (अ०) गोलश्चासंख्यनिगोदरूपः स चानन्तजीवः, अनन्तजीवशरीरं निगोद इत्यर्थः, प्रतिजीवं चासङ्ख्येयाः प्रदेशाः निर्विभा-

ऽयभागा, प्रतिप्रदेशं च कर्मणामनन्ता वर्गणाः, अयमर्थः, एकैकस्मिंश्च गोलके असङ्ख्येया निगोदा, निगोदश्चानन्तानां सूक्ष्मनामकर्मोदयवर्त्तीनां जीवानामेकं साधारणं शरीरमित्यर्थः, ते च चतुर्दश रज्ज्वात्मके लोके यत्र स्थाने चिन्त्यन्ते तत्र असङ्ख्याता एव प्राप्यन्ते, एकैकस्मिंश्च निगोदेऽनन्ता जीवाः, तेषां सर्वेषां जीवानां तैजसशरीरं कार्मणशरीरं च पृथक् २ वर्त्तते, प्रतिजीवं च प्रदेशा असङ्ख्येयाः, तांश्च यद्येको जीवः स्वशक्त्या विरलीकरोति, तदा एकस्यापि जीवस्य प्रदेशैः सर्वोऽपि चतुर्दशरज्ज्वात्मको लोकः पूर्यते । प्रदेशश्च निर्विभाज्यो भाग. अतिसूक्ष्मोऽंश इत्यर्थः, संसारिजीवानां चैते प्रदेशा ॥ ]

[पइवग्गणमणंता, अणू पइअणु अणंतपज्जाया ।
एवं लोगसरूवं, भाविज्जइ तहत्ति जिणवुत्तं ॥१०१]१२९

[ ( अ० ) प्रतिवर्गणां चानन्ता अणव परमाणवः, प्रतिपरमाणुस्वपरभेदवन्तः द्रव्याद्यपेक्षया भूतभविष्यद्वर्त्तमानकालभाविनोऽनन्ता. पर्यायाः, एवं लोकस्वरूपं जिनोक्तमिति तथेति यथार्थप्रतीत्या भावयेत ॥ ]

[*पुढवाईया सत्ता, सव्वे रुक्खा हवंति भूआवि ।
पाणा बितिचउरिंदी, चउहा पंचिंदिया जीवा ॥१०२]१३०

[ ( अ० ) 'पृथ्व्यादयः' पृथ्व्यप्तेजोवायुकायिकाश्चत्वारः. 'सत्त्वा' इति, सत्त्वशब्देनोच्यन्ते, 'सर्वे वृक्षाः' वनस्पतिकायिकाः, भवन्ति 'भूता अपि' इति. भूतशब्देनाभिधीयन्ते । द्वित्रिचतुरिन्द्रियाः, 'प्राणा' इति. प्राणाभिलापेन प्रतिपाद्यन्ते । 'चतुर्धा पञ्चेन्द्रिया' नारकतिर्यग्नरामरभेदात, 'जीवा' इति, जीवशब्दवाच्याः । तथैवागमे 'सव्वे पाणा. सव्वे भूआ. सव्वे जीवा, सव्वे सत्ता' इत्याद्यालापकेन सर्वसंसारिजीवग्रहणं दृश्यत इति ॥ ]

[सत्तचिरालणपावं, अणंतगुणियं च एगसूअस्स ।
सूअस्स असंखगुणं, पावं गरस्स पाणस्स ॥१०३॥]॥१३१॥

---

* गाथाक्रमाः कुत्रचित्प्रतताप्रतौ जीवतत्त्वे दृश्यन्ते पश्चादुपलब्धत्वात् त्वस्मा दृश्यमेतम् ॥

[बेइंदियतेइंदिय—चउरिंदिय तहेव पंचिंदी ।
लक्खं सहस्सं तह सय—गुणं च पावं मुणेयव्वं॥१०४]१३२

[ ( अ० ) यथोत्तरं जीववधे पापवृद्धिसूचिके गाथे इमे व्यक्ते॥ ]

[जीवो १ संवर २ निज्जर ३ मुक्खो ४ चत्तारि हुंति अरूवी।
रूवी बंधासवपुन्न-पावा मिस्सो अजीवो य ॥१०५]१३३॥

[ (अ०) अथ नवसु मूलेषु तत्त्वेषु रूप्यरूपिविभागमाह—जीव. संवरो निर्ज्जरा मोक्षश्चत्वारो भवन्त्यरूपिण , बन्धाश्रवपुण्यपापाश्चत्वारो रूपिण , अजीवश्च मिश्र· रूप्यरूपी चेत्यर्थ· । अथ द्विशतषट्सप्ततिभेदेषु नवतत्त्वप्रभेदेषु तमेवाह—]

[धम्माधम्मागासा, तियतिय अध्धा अजीवदसगा य ।
सत्तावन्नं संवर–निज्जरदुदस मुत्ति नवगा य॥१०६]१३४

[ (अ०) धर्माधर्माकाशानां त्रिकं त्रिकमिति नव, अद्धा १ इत्यजीवदशकं, सप्तपञ्चाशत्संवरभेदा·, निर्ज्जराया द्वादश, मोक्षस्य नव चेति १०-५७-१२-९ ॥ ]

[अट्ठासी य अरूवी, संपइ उ भणामि जे य रूवीणं ।
परमाणुदेसपएसा, खंधा चउ अजीवरूवीणं ॥१०७]१३५

[ (अ० ) अष्टाशीतिश्चारूपिणः, सम्प्रति ये रूपिणां भेदास्तान भणामि । परमाणुदेशप्रदेशस्कन्धाश्चेति चत्वारो रूपिणोऽजीवाः ॥ ]

[जीवे दस चउ दु चउ, बासी बायाल हुंति चत्तारि ।
सय अट्ठासी य रूवी, दुसय छसत्त नवतत्ते ॥१०८] १३६

[ (अ०) कार्मणसंयुतानां जीवानां चतुर्दश पुण्यपापाश्रवबन्धतत्त्वानां क्रमेण ४२-८२-४२-४ इति शतमष्टाशीत्यधिकं रूपिण , सर्वाग्रं नवतत्त्वे द्विशते षट्सप्तत्यधिके ॥ ]

[हेया बंधासवपुण्णपावा, जीवाऽजीवा य हुंति विन्नेया ।
संवरनिज्जरमुक्खो, हवंति एए उवाएया॥१०९॥]॥१३७॥

'(अ०) बन्धाश्रवपुण्यपापा जीवमालिन्यहेतुत्वाद्धेयास्त्याज्या . जीवाजीवौ च तथरूपत्वाद् भवतो विज्ञेयौ ज्ञपरिज्ञाविषयौ. संवरनिर्जरामोक्षा भवन्त्येते उपादेयाः, जीवनैर्मल्यापादकत्वात् ॥ ]

[ ननु पूर्वमुक्तं यदजानानस्यापि भावतः श्रद्दधतो भवति सम्यक्त्वं तत्राविजानतः कीदृशं श्रद्धानं ? कथं च सम्यक्त्वं ? तदाक्षेपपरिहाररूपेणाह— ]

[अवियाणओ पयत्थे, सद्दहणं तेसु केरिसं होइ ? ।
तम्हा वित्थरनाणे, सम्मत्तमणुत्तरं होइ ?॥ ११०] १३८॥

[ ( अ० ) आक्षेपदर्शिका गाथेयं स्पष्टा ॥ ]

[ वित्थरनाणावेक्खं, अन्नाणं एत्थ होइ दट्ठव्वं ।
तेणेह सद्दहंते, अयाणमाणेवि सम्मत्तं ॥ १११ ॥ ] १३९ ॥

[ ( अ० ) यदेतदज्ञानमिहोक्तं न तज्ज्ञानाभावमाश्रित्य, किन्तर्हि ? विस्तरज्ञानापेक्षं, यथा समृद्धिमन्तं कञ्चिदपेक्ष्य स्वल्पर्धिकः अनृद्धिकोपि भण्यते, यथा वा जीर्णपरिशटितप्रायवस्त्रसद्भावेप्यचेलत्वं लोके शास्त्रेऽपि पठ्यते, तेन विस्तरज्ञानविकलस्यापि 'तमेव सच्चं णीसंकं जं जिणेहि पवेइयं' 'इणमेव णिग्गथं पावयणं सच्चे णं एसमट्ठे एस परमट्ठे सेसे अणट्ठे' इत्यादिना शुभाध्यवसायेन श्रद्धानवतः सम्यक्त्वम् ॥ तदेव दृष्टान्तेन प्रत्याययति ॥ ]

[एत्तोच्चिय निद्दिट्ठा, मासतुसप्पभिईओ सुदिट्ठित्ति ।
एत्तो च्चिय चारित्ती,एत्तोच्चिय सिद्धिगामित्ति ॥११२]१४०

[ (अ०) 'इतएव' श्रद्धानमात्रादेव, अन्यथा 'नादर्शनिनो ज्ञानं नाज्ञानिनश्चारित्रं' इतिवचनाच्चारित्राभाव आपद्येत, तदभावे च मोक्षाभावः स्यात्. नचैतदिष्टं, आगमे मासतुषप्रभृतीनामपि मुनिपुङ्गवानां मुक्तिश्रवणादित्यलमतिपल्लवितेन अथ सम्यक्त्वफलमाहात्म्यं सङ्क्षेपस्वरूपं चाह— ]

[सम्मं च मोक्खबीयं, तं पुण भूयत्थसद्दहणरूवं ।
पसमाइलिंगगम्मं, सुहायपरिणामरूवंतु ॥११३॥] १४१॥

[ (अ०) जिनाभिहितत्वेनावितथानां भूतार्थानां जीवाजीवादीनां पूर्वभणिताकारश्रद्धानस्वरूपम्, प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यलिङ्गलक्ष्यं शुभात्मपरिणामरूपं तत, 'तदेव सकलकल्याणवल्ली दर्शनमोहनीयकर्मक्षयोपशमादिनाऽऽविर्भूतः सत्यात्मपरिणाम एव विशुद्धसम्यग्दर्शनमभिधीयते' तच सम्यक्त्वं मोक्षबीजम् ॥ तन्माहात्म्यदर्शकानि धैतानि पद्यानि ॥ "अन्तर्मुहूर्तमपि स.

समुपास्य जीवः, सम्यक्त्वरत्नममलं विजहाति सद्यः ॥ बम्भ्रम्यते भवपथे सुचिरं न सोऽपि, तद्भिःश्रतश्चिरतरं किमुदीरयामः ॥ १ ॥ असंप्राप्ते बोधिरत्ने, चक्रवर्त्यपि रङ्कवत् । संप्राप्तबोधिरत्नस्तु रङ्कोपि स्यात्ततोऽधिकः ॥ २ ॥ सर्वे भावाः सर्वजीवैः, प्राप्तपूर्वा अनेकशः । बोधिर्न जातुचित्प्राप्तो भवभ्रमणदर्शनात् ॥ ३ ॥ दातॄणां मौलिमाणिक्यं, सद्दर्शनमिदं खलु । यस्य दानं विमुक्तिश्री-दानावधि विजृम्भते ॥ ४ ॥ मूलं बोधिद्रुमस्यैतत्, द्वारं पुण्यपुरस्य च । पीठं निर्वाणहर्म्यस्य, निधानं सर्वसम्पदाम् ॥५॥ इत्यादि" ]

॥ इतिसकलस्वपरसमयपारावारपारीण-जगदनुग्रह-विहितानेकग्रन्थ-संयमभृच्छिरोरत्न-जङ्गमयुगप्रधान तपोगच्छाधिपति **भट्टारक श्री विजयनेमिसूरिश्वर** विनेयाणुसिद्धान्तवाचस्पति--न्यायविशारद--अनुयोगाचार्य **महोपाध्याय श्री-उदयविजयगणि**विनिर्मिता बृहन्नवतत्त्वप्रक्षेपगाथावचूर्णिः समाप्ता ॥

सारस्फारसुवर्णराशिकलितं सर्वार्थसिद्धिप्रदं,
विस्तीर्णैर्नवभिः सुतत्त्वनिधिभिः संपूरितं सर्वदा ।
प्रस्फूर्जद्गुणसाधुवृत्तविलसद्रत्नाश्चितं श्रीपदं,
शास्त्रं भव्यजनोपकृत्यभिमतं विश्वे चिरं नन्दतात् ॥१॥
यदुत्सूत्रं मयालेखि, राभस्यान्मतिमौढ्यतः ।
कृपां विधाय संशोध्यं, तद्बुधैर्विशदाशयैः ॥ २ ॥

समाप्तं श्रीचिरन्तनाचार्यविरचितावचूर्णि-श्रीसाधुरत्नसूरिकृतावचूर्णि-श्रीदेवेन्द्रसूरिप्रणीतवृत्ति-बृहन्नवतत्त्वप्रक्षेपगाथा-तदवचूर्णिपञ्चरत्नविभूषितं॥

॥ नवतत्त्वप्रकरणम् ॥

## ॥ अथैतेषु नवसु तत्त्वेषु जीवाजीवरूप्यरूपिज्ञेयहेयोपादेय विभागयन्त्रकम् ॥

| ९ तत्त्वनमानि | प्रति भेद | जीव | अजीव | रूपि० | अरूपि | हेय | ज्ञेय | उपादेय |
|---|---|---|---|---|---|---|---|---|
| जीवतत्त्वम् | १४ | १४ | ० | १४ | ० | ० | १४ | ० |
| अजीवतत्त्वम् | १४ | ० | १४ | ४ | १० | ० | १४ | ० |
| पुण्यतत्त्वम् | ४२ | ० | ४२ | ४२ | ० | ४२ | ० | ० |
| पापतत्त्वम् | ८२ | ० | ८२ | ८२ | ० | ८२ | ० | ० |
| आश्रवतत्त्वम् | ४२ | ० | ४२ | ४२ | ० | ४२ | ० | ० |
| संवरतत्त्वम् | ५७ | ५७ | ० | ० | ५७ | ० | ० | ५७ |
| निर्जरातत्त्वम् | १२ | १२ | ० | ० | १२ | ० | ० | १२ |
| बन्धतत्त्वम् | ४ | ० | ४ | ४ | ० | ४ | ० | ० |
| मोक्षतत्त्वम् | ९ | ९ | ० | ० | ९ | ० | ० | ९ |
| | २७६ | ९२ | १८४ | १८८ | ८८ | १७० | २८ | ७८ |

## ॥ अथ षट्सु द्रव्येषु परिणाम्यादिविभागयन्त्रकम् ॥

| ६ द्रव्यनामानि | परिणा० | जीव | मूर्त | सप्रदे० | एक | क्षेत्र | सक्रिय | नित्य | कारण | कर्ता | सर्वग० | अप्र० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| धर्मास्तिकाय | ० | ० | ० | १ | १ | ० | ० | १ | १ | ० | ० | १ |
| अधर्मास्तिकाय | ० | ० | ० | १ | १ | ० | ० | १ | १ | ० | ० | १ |
| आकाशास्तिकाय | ० | ० | ० | १ | १ | १ | ० | १ | १ | ० | १ | १ |
| जीवास्तिकाय | १ | १ | ० | १ | ० | ० | १ | ० | ० | १ | ० | १ |
| पुद्गलास्तिकाय | १ | ० | १ | १ | ० | ० | १ | ० | १ | ० | ० | १ |
| काल | ० | ० | ० | ० | ० | ० | ० | १ | १ | ० | ० | १ |



॥ कलिकालसर्वज्ञभगवत्पादश्रीहेमचन्द्रसूरिप्रणीतं ॥

# ॥ सप्ततत्त्वप्रकरणम् ॥

( भाषान्तरोपेतं ) परिशिष्ट नं. झ. ( ११ )

जीवाजीवावाश्रवश्च, संवरो निर्जरा तथा। बन्धो मोक्षश्चेति सप्त, तत्त्वान्याहुर्मनीषिणः ॥ १ ॥ तत्र जीवा द्विधा ज्ञेया, मुक्तसंसारिभेदतः । अनादिनिधनाः सर्वे, ज्ञानदर्शनलक्षणाः ॥ २ ॥ मुक्ता एकस्वभावाःस्यु-र्जन्मादिक्लेशवर्जिताः अनन्तदर्शनज्ञान-वीर्यानन्दमयाश्च ते ॥ ३ ॥ संसारिणो द्विधा जीवाः, स्थावरत्रसभेदतः । द्वितयेऽपि द्विधा पर्या-प्तापर्याप्तविशेषतः ॥४॥ पर्याप्तयस्तु षडिमाः, पर्याप्त-

---

ભા૦ બુદ્ધિમાનો તીર્થંકર, ગણધરો, જીવ, અજીવ, આશ્રવ, સંવર, નિર્જરા, બંધ, અને મોક્ષ એ સાત તત્ત્વો કહે છે (૧) ત્યાં મુક્ત અને સંસારી ભેદથી જીવો બે પ્રકારના જાણવા એ સર્વે જીવો અનાદિ અનન્ત અને જ્ઞાન દર્શનરૂપ લક્ષણવાળા છે (૨) મુક્ત જીવો એક સરખા સ્વભાવવાળા, જન્માદિ ક્લેશ રહિત, અનંત દર્શન જ્ઞાન વીર્ય અને આનંદવાળા છે. (૩) સ્થાવર અને ત્રસ ભેદથી સંસારી જીવો બે પ્રકારના છે, વળી એ બન્ને ભેદ પણ પર્યાપ્ત અને અપર્યાપ્ત ભેદથી બે બે પ્રકારના છે (૪) પર્યાપ્તપણામાં કારણભૂત એવી આહાર-શરીર-ઇન્દ્રિય-ઉચ્છ્વાસ-ભાષા-અને મન એ છ

स्तनिबन्धनम । आहारो वपुरक्षाणि, प्राणो भाषा मनोऽपि च ॥५॥ स्युरेकाक्षविकलाक्ष—पञ्चाक्षाणां शरीरिणाम। चतस्रः पञ्च षट् चापि, पर्याप्तयो यथाक्रमम् ॥ ६ ॥ एकाक्षाः स्थावरा भूम्य—प्तेजोवायुमहीरुहः। तेषां तु पूर्वे चत्वारः, स्युः सूक्ष्मा बादरा अपि ॥ ७॥ प्रत्येकाः साधारणाश्च द्विप्रकारा महीरुहः। तेऽत्र पूर्वे बादराः स्यु—रुत्तरे सूक्ष्मबादराः ॥ ८ ॥ त्रसा द्वित्रिचतुःपञ्चे—न्द्रियत्वेन चतुर्विधाः तत्र पञ्चेन्द्रिया द्वेधा, संज्ञिनोऽसंज्ञिनोऽपि च ॥ ९ ॥ शिक्षोपदेशालापान् ये, जानते तेऽत्र संज्ञिनः। सम्प्रवृत्तमनःप्राणा—स्तेभ्योऽन्ये स्युरसंज्ञिनः ॥ १० ॥ स्पर्शनं रसनं घ्राणं, चक्षुः श्रोत्रमितीन्द्रियम् । तस्य स्पर्शः रसो गन्धो, रूपं शब्दश्च गोचरः ॥ ११ ॥ द्वीन्द्रियाः कृमयः शङ्खा, गण्डूपदा जलौकसः। कपर्दाः शुक्तिकाद्याश्च, विविधाः कृमयो मताः॥ १२ ॥ यूकामत्कुणमत्कोट—लिक्षाद्यास्त्रीन्द्रिया मताः। पतङ्गमक्षिकाभृङ्ग—दंशाद्याश्चतुरिन्द्रियाः ॥१३॥ तिर्यग्योनिभवाःशेषा,

---

પર્યાપ્તિઓ છે ( ૫ ) એકેન્દ્રિય વિકલેન્દ્રિય અને પંચેન્દ્રિય જીવોને અનુક્રમે ચાર પાંચ અને ૭ પર્યાપ્તિઓ હોય છે ( ૬ ) પૃથ્વી, જળ, અગ્નિ, વાયુ, અને વનસ્પતિ એ પાંચ એકેન્દ્રિયો સ્થાવર છે, એમાના પહેલા ચાર ભેદ ( વન૦ વિના ) સૂક્ષ્મ અને બાદર પણ છે ( ૭ ) વનસ્પતિ પ્રત્યેક અને સાધારણ એમ બે પ્રકારની છે, તેમા પહેલી ( પ્રત્યેક ) વનસ્પતિ બાદર છે, અને આગળની ( સાધા૦ ) વનસ્પતિ સૂક્ષ્મ અને બાદર છે ( ૮ ) ત્રસ-જીવો દ્વીન્દ્રિય–ત્રીન્દ્રિય–ચતુરિન્દ્રિય–અને પંચેન્દ્રિય એમ ૪ પ્રકારના છે, ત્યાં પંચેન્દ્રિય જીવો સંજ્ઞિ અને અસંજ્ઞિ એમ ૨ પ્રકારના છે ( ૯ ) જે પ્રવૃત્ત થએલ મન પ્રાણવાળા, જેઓ શિક્ષા ઉપદેશ અને આલાપ ( વચનો ) ને જાણે છે તે જીવ અહિં સંજ્ઞિ કહેવાય છે, અને તેથી બીજા જીવો અસંજ્ઞિ છે ( ૧૦ ) સ્પર્શન, રસના, ઘ્રાણ, ચક્ષુ, અને શ્રોત્ર એ ઇન્દ્રિયો છે, અને ( અનુક્રમે ) સ્પર્શ, રસ, ગંધ, રૂપ, અને શબ્દ એ તેના વિષયો છે (૧૧) કૃમી, શંખ, અળસીઆ, જળો, કોડીઓ, છીપો વિગેરે અનેક પ્રકારના એ દ્વીન્દ્રિય જીવો માનેલા છે ( ૧૨ ) જૂ, માંકડ, મંકોડા, લીખ વિગેરે ત્રીન્દ્રિય જીવો માનેલા છે, અને પતંગીઆં, માખી, ભમરા, ડાંસ વિગેરે

जलस्थलखचारिणः । नारका मानवा देवाः, सर्वे पञ्चेन्द्रिया मताः ॥१४॥ मनोभाषाकायबल–त्रयमिन्द्रियपञ्चकम । आयुरुच्छ्वासनिःश्वास–मिति प्राणा दश स्मृताः ॥१५॥ सर्वजीवेषु देहायु–रुच्छ्वासा इन्द्रियाणि च । विकलासंज्ञिनां भाषा, पूर्णानां संज्ञिनां मनः ॥१६॥ उपपादभवा देव–नारका गर्भजाः पुनः। जरायुःपोताण्डभवाः, शेषाः सम्मूर्छनोद्भवाः ॥ १७ ॥ सम्मूर्छिनो नारकाश्च, जीवाः पापा नपुंसकाः । देवाः स्त्रीपुंसवेदाः स्यु–र्वेदत्रयजुषः परे ॥ १८ ॥ सर्वे जीवा व्यवहार्य–व्यवहारितया द्विधा । सूक्ष्मनिगोदा एवान्त्या–स्तेभ्योऽन्ये व्यवहारिणः ॥ १९ ॥ सचित्तः संवृतः शीत–स्तदन्यो मिश्रितोऽपि वा । विभेदैरान्तरैर्भिन्नो, नवधा योनिरङ्गिनाम ॥२०॥ प्रत्येकं सप्त लक्षाश्च, पृथ्वीवार्यग्निवायुषु । प्रत्येकानन्तकायेषु, क्रमाद्दश चतुर्दश

---

ચતુરિન્દ્રિય જીવો છે ( ૧૩ ) શેષ તિર્યંચયોનિમા ઉત્પન્ન થયેલા જલચર સ્થલચર ખેચર તથા નારક મનુષ્ય અને દેવ એ સર્વ પંચેન્દ્રિય માનેલા છે ( ૧૪ ) મન ભાષા અને કાય એ ૩ બલ, ૫ ઇન્દ્રિય, આયુષ્ય અને ઉચ્છ્વાસનિશ્વાસ એ ૧૦ પ્રાણ કહેલા છે ( ૧૫ ) કાયબળ, ઉચ્છ્વાસ, આયુષ્ય, અને ઇન્દ્રિયો એ પ્રાણો સર્વ જીવોમા હોય, પર્યાપ્તા વિકલેન્દ્રિય અને અસજ્ઞિને ભાષા પ્રાણ ( અધિક ), અને પૂર્ણ (પર્યાપ્ત) સજ્ઞિ જીવોને મન પ્રાણ (અધિક) છે. ( ૧૬ ) દેવ અને નારકો ઉપપાત જન્મવાળા છે. ગર્ભજ જીવો જરાયુ પોત અને ઇંડાથી જન્મવાળા છે, અને શેષ જીવો સમ્મૂર્ચ્છન જન્મવાળા છે ( ૧૭ ) સમ્મૂર્ચ્છિમ અને નારક જીવો પાપવાળા અને નપુસક વેદી છે, દેવો સ્ત્રી–પુરૂષવેદી છે, અને શેષ જીવો ત્રણે વેદવાળા છે ( ૧૮ ) સર્વે જીવો વ્યવહારી અને અવ્યવહારીપણે બે પ્રકારના છે, તેમા (બાદરપણુ નહિ પામેલા) સૂક્ષ્મનિગોદ જીવોજ અવ્યવહારી છે, અને (એક વાર બાદરપણુ પામી પુન સૂક્ષ્મનિગોદમા ગયેલા તથા) સૂક્ષ્મનિગોદ સિવાયના જીવો વ્યવહારી છે. ( ૧૯ ) જીવોની સચિત્ત–સવૃત–શીત, અચિત્ત–વિવૃત–ઉષ્ણ, સચિત્તાચિત્ત–સંવૃતવિવૃત–અને શીતોષ્ણ એ પ્રમાણે અન્તર્ગત ઘણા ભેદ વડે ભિન્ન (એટલે સચિત્તાદિ ૯ યોનિઓમા પણ સવૃત્તાદિ ભેદ પ્રાપ્ત થાય) એવી યોનિ ૯ પ્રકારની છે. ( ૨૦ ) પૃથ્વી, જળ, અગ્નિ, અને વાયુની દરેકની સાત સાત લાખ યોનિ છે, પ્રત્યેક તથા સાધારણ વનસ્પ-

॥ २१ ॥ षट् पुनर्विकलाक्षेषु, मनुष्येषु चतुर्दश । स्युश्चतस्रश्चतस्रश्च, श्वभ्रितिर्यक्सुरेषु तु ॥२२॥ एवं लक्षाणि योनीना–मशीतिश्चतुरुत्तरा। केवलज्ञानदृष्टानि, सर्वेषामपि जन्मिनाम् ॥ २३ ॥ एकाक्षा बादराः सूक्ष्माः, पञ्चाक्षाः संज्ञ्यसंज्ञिनः। स्युर्द्वित्रिचतुरक्षाश्च, पर्याप्ता इतरेऽपि च ॥ २४ ॥ एतानि जीवस्थानानि, मयोक्तानि चतुर्दश । मार्गणा अपि तावन्त्यो, ज्ञेयास्ता नामतो यथा ॥२५॥ गतीन्द्रियकाययोग-वेदज्ञानकुधादयः । संयमाहारदृग्लेश्या–भव्यसम्यक्त्वसंज्ञिनः ॥२६॥ मिथ्यादृष्टिःसास्वादन-सम्यग्मिथ्यादृशावपि। अविरतसम्यग्दृष्टि-र्विरताविरतोऽपि च ॥ २७ ॥ प्रमत्तश्चाप्रमत्तश्च, निवृत्तिबादरस्ततः । अनिवृत्तिबादरश्चा–थ सूक्ष्मसम्परायकः ॥२८॥ ततः प्रशान्तमोहश्च, क्षीणमोहश्च योगवान् । अयोगवानिति गुण–स्थानानि स्युश्चतुर्दश ॥ २९ ॥ मिथ्यादृष्टिर्भवेन्मिथ्या–दर्शनस्योदये सति । गुणस्थानत्व-मेतस्य, भद्रकत्वाद्यपेक्षया ॥३०॥ मिथ्यात्वस्यानुदये–ऽनन्तानुबन्ध्यु-

---

નિકાયમાં અનુક્રમે દશ લાખ તથા ચૌદ લાખ યોનિઓ છે (૨૧) વિકલેન્દ્રિઓમાં (દ્વીન્દ્રિયાદિ પ્રત્યેકની બબે લાખ હોવાથી) ૭ લાખ, મનુષ્યોમાં ચૌદ લાખ તથા નારક તિર્યંચ અને દેવાની ચાર ચાર લાખ યોનિ છે. (૨૨) એ પ્રમાણે કેવળ જ્ઞાનીઓના કથનાનુસાર સર્વ જીવોની ૮૪ લાખ યોનિઓ કહેલી છે (૨૩) બાદર એકેન્દ્રિય, સૂક્ષ્મ એકેન્દ્રિય, સંજ્ઞિ પંચેન્દ્રિય, અસંજ્ઞિ પંચેન્દ્રિય, દ્વીન્દ્રિય, ત્રીન્દ્રિય, અને ચતુરિન્દ્રિય એ (સાતે) પર્યાપ્ત અને અપર્યાપ્ત (૨૪) એ ૧૪ જીવસ્થાન મેં કહ્યાં, અને માર્ગણાઓ પણ તેટલીજ (૧૪) જાણવી. તે માર્ગણાઓના નામ આ પ્રમાણે—(૨૫) ગતિ—ઇન્દ્રિય—કાય—યોગ—વેદ—જ્ઞાન—ક્રોધાદિકષાય—સંયમ—આહારી—દર્શન—લેશ્યા—ભવ્ય—સમ્યક્ત્વ—અને સંજ્ઞિ. (૨૬) મિથ્યાદષ્ટિ, સાસ્વાદન, મિશ્ર, અવિરત સમ્યગ્ દષ્ટિ, દેશવિરત, પ્રમત્ત અપ્રમત્ત, નિવૃત્તિબાદર, અનિવૃત્તિબાદર સૂક્ષ્મસંપરાય, ઉપશાન્તમોહ, ક્ષીણમોહ, સયોગી, અને અયોગી એ ૧૪ ગુણસ્થાન છે (૨૭-૨૮-૨૯) મિથ્યાદર્શનનો ઉદય હોતે જીવ મિથ્યાદષ્ટિ હોય છે. એને ગુણસ્થાનપણું તે ભદ્રકપણાદિકની અપેક્ષાએ છે (૩૦) મિથ્યાત્વનો અનુદય અને અનંતાનુબંધિનો ઉદય હોવાથી સાસ્વાદન સમ્યગ્દષ્ટિ તે ઉત્કૃષ્ટથી ૬ આવલિકા સુધી હોય. (૩૧) સમ્ય-

दये सति । सास्वादनसम्यग्दृष्टिः, स्यादुत्कर्षात् षडावलीः॥ ३१ ॥ सम्यक्त्वमिथ्यात्वयोगा–न्मुहूर्तं मिश्रदर्शनः। अविरतसम्यग्दृष्टि–रप्रत्याख्यानकोदये ॥ ३२ ॥ विरताविरतस्तु स्यात्, प्रत्याख्यानोदये सति । प्रमत्तसंयतः प्राप्त–संयमो यः प्रमाद्यति ॥ ३३॥ सोऽप्रमत्तसंयतो यः, संयमी न प्रमाद्यति। उभावपि परावृत्त्या, स्यातामान्तर्मुहूर्तिकौ ॥ ३४ ॥ कर्मणां स्थितिघातादी–नपूर्वान् कुरुते यतः। तस्मादपूर्वकरणः, क्षपकः शमकश्च सः ॥३५॥ यद्बादरकषायाणां, प्रविष्टानामिमं मिथः । परिणामा निवर्तन्ते, निवृत्तिबादरोऽपि सः ॥३६॥ परिणामा निवर्तन्ते, मिथो यत्र न यत्नतः । अनिवृत्तिबादरः स्यात्, क्षपकः शमकश्च सः ॥३७॥ लोभाभिधः सम्परायः, सूक्ष्मकिट्टीकृतो यतः। स सूक्ष्मसम्परायः स्यात्, क्षपकः शमकोऽपि च ॥३८॥ अथोपशान्तमोहः स्या–न्मोहस्योपशमे सति । मोहस्य तु क्षये जाते,

---

ક્ત્વ અને મિથ્યાત્વના યોગથી મુહૂર્ત્ત (અન્તર્મુહૂર્ત્ત) પર્યન્ત **મિશ્રદૃષ્ટિ** હોય છે, અને અપ્રત્યાખ્યાન કષાયના ઉદયથી **અવિરતસમ્યગ્દૃષ્ટિ** હોય છે (૩૨) પ્રત્યાખ્યાન કષાયને ઉદય હોવાથી **દેશવિરતિ** હોય, અને પ્રાપ્તસંયમ એવા જે મુનિ પ્રમાદ કરે તે **પ્રમત્તસંયત** કહેવાય (૩૩) જે મુનિ પ્રમાદ ન કરે તે **અપ્રમત્તસંયત** છે એ બન્ને પરાવૃત્તિએ અન્તર્મુહૂર્ત્ત પર્યન્ત હોય છે (૩૪) જે કારણથી કર્મોના અપૂર્વ સ્થિતિઘાતાદિ (કરણ) કરે છે. તેથી **અપૂર્વકરણ** કહેવાય છે, અને તે ક્ષપક અને ઉપશમક હોય છે (૩૫) જે એમાં (એક સાથે) પ્રવેશ કરેલા પણ બાદરકષાયી જીવોના અધ્યવસાયો પરસ્પર નિવર્ત્તે છે (તફાવતવાળા હોય છે) તેથી એ જીવ (અપૂર્વ૦ વર્તી જીવ) **નિવૃત્તિબાદર** પણ કહેવાય છે (૩૬) જેમા પ્રયત્નથી (એક સાથે પ્રવેશ કરેલા જીવોના) અધ્યવસાયો પરસ્પર નિવર્તતા નથી (અર્થાત્ તુલ્ય રહે છે) તે **અનિવૃત્તિબાદર** ક્ષપક અને ઉપશમક (એમ બે પ્રકારે) છે. (૩૭) જે કારણથી લોભ નામનો કષાય સૂક્ષ્મકિટ્ટિ રૂપે કરાયલો હોય છે તે **સૂક્ષ્મસંપરાય** ક્ષપક અને ઉપશમક (એમ બે પ્રકારે) છે (૩૮) વળી મોહને ઉપશમ થયે છતે **ઉપશાન્તમોહ** હોય. અને મોહનો ક્ષય થયે **ક્ષીણમોહ** કહેવાય છે. (૩૯) ઘાતિકર્મોના ક્ષયથી ઉત્પન્ન થયેલ કેવળ જ્ઞાન

क्षीणमोहं प्रचक्षते ॥३९॥ सयोगिकेवली घाति-क्षयादुत्पन्नकेवलः । योगानां च क्षये जाते, स एवायोगिकेवली ॥ ४० ॥

( इति जीवतत्त्वम् १ )

अजीवाः स्युर्धर्माधर्म-विहायःकालपुद्गलाः। जीवेन सह पञ्चापि, द्रव्याण्येते निवेदिताः ॥ ४१ ॥ तत्र कालं विना सर्वे, प्रदेशप्रचयात्मकाः । विना जीवमचिद्रूपा, अकर्तारश्च ते मताः ॥ ४२ ॥ कालं विनाऽस्तिकायाः स्यु-रमूर्ताः पुद्गलं विना । उत्पादविगमध्रौव्या-त्मानः सर्वेऽपि ते पुनः ॥४३॥ पुद्गलाः स्युः स्पर्शरस-गन्धवर्णस्वरूपिणः । तेऽणुस्कन्धतया द्वेधा, तत्राबद्धाः किलाणवः ॥ ४४ ॥ बद्धाः स्कन्धा गन्धशब्द-सौक्ष्म्यस्थौल्याकृतिस्पृशः। अन्धकारातपोद्योत-भेदच्छायात्मका अपि ॥४५॥ कर्मकायमनोभाषा-चेष्टितोच्छ्वासदायिनः । सुखदुःखजीवितव्य-मृत्यूपग्रहकारिणः॥४६॥ प्रत्येकमेकद्रव्याणि, ध-

---

[illegible] (આત્મા) સયોગી કેવળી, અને યોગોનો ક્ષય થયે તેજ જીવ અયોગી કેવળી હોય છે ( ૪૦ ) ( ઇતિ જીવતત્ત્વમ ૧ ॥ )

ધર્માસ્તિકાય, અધર્માસ્તિકાય, આકાશાસ્તિકાય, કાળ, અને પુદ્ગલાસ્તિકાય (એ પાંચ) અજીવ છે, અને આ પાંચે પણ જીવ સહિત દ્રવ્ય (ષડ્દ્રવ્ય) કહેલાં છે. ( ૪૧ ) તેમાં કાળ વિના સર્વે ( પાંચે દ્રવ્ય) પ્રદેશ સમુદાય રૂપ છે, અને જીવ વિના એ (પાંચે) દ્રવ્યો અજીવ અને અકર્તા માનેલા છે ( ૪૨ ) કાળ વિના (પાંચે) અસ્તિકાય છે. પુદ્ગલ વિના (પાંચે) અરૂપી છે, અને એ સર્વે (છએ) દ્રવ્યો ઉત્પત્તિ વિનાશ અને ધ્રુવતા સ્વરૂપ વાળા છે ( ૪૩ ) પુદ્ગલો સ્પર્શ રસ ગંધ અને વર્ણ સ્વરૂપી છે, વળી એ પુદ્ગલો પરમાણુ અને સ્કંધપણે બે પ્રકારના છે. ત્યાં અબદ્ધ (સ્કંધરૂપે સમુદિત નહિ થયેલા) તે નિશ્ચયે પરમાણુઓ છે. ( ૪૪ ) અને (પરસ્પર) બદ્ધ થયેલા તે સ્કંધો, તે ગંધ, શબ્દ, સૂક્ષ્મતા, સ્થૂલતા, અને આકારવાળા તથા અંધકાર, આતપ, ઉદ્યોત, ભેદ, અને છાયાવાળા પણ હોય છે. ( ૪૫ ) વળી તે કર્મ કાયા મન અને ભાષાની ચેષ્ટા તથા ઉચ્છ્વાસ આપનાર, તેમજ સુખ દુઃખ જીવિત મરણમાં ટેકો (મદદ) આપનાર (પુદ્ગલો) છે. ( ૪૬ ) ધર્માસ્તિકાય, અધર્માસ્તિકાય, અને આકાશ એ પ્રત્યેક એકેક દ્રવ્ય

र्मधर्मौ नभोऽपि च। अमूर्तानि निष्क्रियाणि, स्थिराण्यपि च सर्वदा ॥४७॥ एकजीवपरिमाण-सङ्ख्यातीतप्रदेशकौ। लोकाकाशमभिव्याप्य, धर्माधर्मौ व्यवस्थितौ ॥४८॥ स्वयं गन्तुं प्रवृत्तेषु, जीवाजीवेषु सर्वतः। सहकारी भवेद्धर्मः, पानीयमिव यादसाम् ॥ ४९ ॥ जीवानां पुद्गलानां च, प्रपन्नानां स्वयं स्थितिम्। अधर्मः सहकार्येष, यथा छायाऽध्वयायिनाम् ॥ ५० ॥ सर्वगं स्वप्रतिष्ठं स्या-दाकाशमवकाशदम्। लोकालोकौ स्थितं व्याप्य, तदनन्तप्रदेशभाक् ॥५१॥ लोकाकाशप्रदेशस्था, भिन्नाः कालाणवस्तु ये। भावानां परिवर्ताय, मुख्यकालः स उच्यते ॥ ५२ ॥ ज्योतिःशास्त्रे यस्य मान-मुच्यते समयादिकम्। स व्यावहारिकः कालः, कालवेदिभिरामतः ॥५३॥ नवजीर्णादिरूपेण, यदमी भुवनोदरे। पदार्थाः परिवर्तन्ते, तत् कालस्यैव चेष्टितम् ॥५४॥ वर्तमाना अतीतत्वं, भाविनो वर्तमानताम्।

---

છે, તેમજ સર્વદા અરૂપી અક્રિય અને સ્થિરપણે છે (૪૭) ધર્માસ્તિકાય અને અધર્માસ્તિકાય એક જીવ પ્રમાણ અસખ્યાત પ્રદેશવાળા (અર્થાત્ એક જીવના જેટલા પ્રદેશ તેટલાજ ધર્મા૦ ના અને અધર્મા૦ ના પણ) છે, અને (એ બન્ને) લોકાકાશમા વ્યાપીને રહેલા છે. (૪૮) ગમન કરવાને સ્વતઃ પ્રવૃત્ત થયેલા જીવ અજીવને માછલાઓને જલની માફક સર્વ બાજુથી સહકારી (સ્હાયક) **ધર્માસ્તિકાય** છે (૪૯) છાયા જેમ વટેમાર્ગુઓને (સ્થિરથવામાં સ્હાયક છે) તેમ પોતાની મેળે સ્થિરતાને પ્રાપ્ત થયેલા જીવ અને પુદ્ગલોને આ **અધર્માસ્તિકાય** સહકારી (સ્હાયક) છે. (૫૦) અવકાશ આપનાર **આકાશાસ્તિકાય** સર્વ વ્યાપ્ત અને સ્વપ્રતિષ્ટ (પોતાની મેળે પોતામાજ રહેલું) છે,અને અનત પ્રદેશવાળું તે આકાશ લોકાલોકમા વ્યાપી રહેલુ છે. (૫૧) લોકાકાશના પ્રદેશમાં રહેલા અને ભાવાની પરિવર્તના (નવપુરાણના) ને માટે ભિન્ન એવા જે કાળના પરમાણુઓ તે **મુખ્યકાળ** (નિશ્ચયકાળ) કહેવાય છે. (૫૨) અને જ્યોતિષ્શાસ્ત્રમાં જેનુ પ્રમાણ સમય ઇત્યાદિ કહેવાય છે, તેને કાળજ્ઞાનીઓએ (શ્રી સર્વજ્ઞોએ) વ્યાવહારિક કાળ માનેલા છે (૫૩) ત્રણભુવનમા જે આ પદાર્થો નવા જૂના પણે પરિવર્તન પામે છે, તે કાળનુંજ ચેષ્ટિત (કાર્ય) છે. (૫૪) કાળની ક્રીડાવડે વિટંબણા પામેલા પદાર્થો વર્ત-

पदार्थाः प्रतिपद्यन्ते, कालक्रीडाविडम्बिताः ॥ ५५ ॥

( इति अजीवतत्त्वम् २ )

मनोवचनकायानां, यत्स्यात् कर्म स आश्रवः । शुभः शुभस्य हेतुः स्या–दशुभस्त्वशुभस्य सः ॥ ५६ ॥ मनोवाक्कायकर्माणि, योगाः कर्म शुभाशुभम । यदाश्रवन्ति जन्तूना–माश्रवास्तेन कीर्तिताः ॥५७॥ मैत्र्यादिवासितं चेतः, कर्म सूते शुभात्मकम । कपायविषयाक्रान्तं, वितनोत्यशुभं पुनः ॥५८॥ शुभार्जनाय निर्मिथ्यं, श्रुतज्ञानाश्रितं वचः। विपरीतं पुनर्ज्ञेय–मशुभार्जनहेतवे ॥५९॥ शरीरेण सुगुप्तेन, शरीरी चिनुते शुभम । सततारम्भिणा जन्तु–घातकेनाशुभं पुनः ॥६०॥ कपाया विषया योगाः, प्रमादाविरती तथा । मिथ्यात्वमार्त्तरौद्रे चे–त्यशुभं प्रति हेतवः ॥६१॥ यः कर्मपुद्गलादान–हेतुःप्रोक्तःस आश्रवः। कर्माणि चाष्टधा ज्ञाना–वरणीयादि-

માન હોય તો અતીતપણું પામે છે, અને ભવિષ્યકાળના હોય તો વર્તમાનપણું પામે છે. ( ૫૫ ) ( ઇતિ અજીવતત્ત્વમ્ ૨ ॥ )

મન વચન અને કાયાની જે ક્રિયા તે આશ્રવ છે. ત્યાં શુભાશ્રવ તે શુભ (પુણ્ય) નો હેતુ અને અશુભાશ્રવ તે અશુભ (પાપ) નો હેતુ છે (૫૬) જે કારણથી જીવોના મન વચન કાયાની ક્રિયાઓ રૂપ યોગો શુભાશુભ કર્મને આશ્રવે છે (જીવ સાથે પ્રાપ્ત કરાવે છે) તે કારણથી આશ્રવ કહેલા છે, ( ૫૭ ) (મનોયોગાશ્રવ) મૈત્ર્યાદિ ભાવનાઓ વડે વાસિત થયેલું ચિત્ત શુભકર્મ ઉત્પન્ન કરે છે, અને કષાય તથા વિષયથી વ્યાપ્ત થયેલું ચિત્ત અશુભકર્મ ઉત્પન્ન કરે છે ( ૫૮ ) (વચનયોગાશ્રવ) શ્રુતજ્ઞાનાશ્રિત સત્યવચન શુભકર્મ ઉત્પન્ન કરવામાં અને તેથી વિપરીત (શ્રુત અનાશ્રિત અસત્ય) વચન અશુભ કર્મને ઉત્પન્ન કરવામાં કારણ રૂપ જાણવું. ( ૫૯ ) (કાયયોગાશ્રવ) [illegible] કાયાવડે શુભ કર્મ ગ્રહણ કરે છે, અને નિરંતર [illegible] કાયાવડે અશુભકર્મ ગ્રહણ કરે છે. ( ૬૦ ) કષાય, વિષય [illegible] પ્રમાદ અવિરતિ, મિથ્યાત્વ, અને આર્તધ્યાન તથા રૌદ્રધ્યાન [illegible] અશુભકર્મ [illegible] કારણરૂપ છે. ( ૬૧ ) કર્મપુદ્ગલ ગ્રહણ કરવામાં જે કારણરૂપ તે આશ્રવ કહેલ છે. અને કર્મ પણ જ્ઞાનાવરણીયાદિ ભેદથી

भेदतः ॥६२॥ ज्ञानदर्शनयोस्तद्व-त्तद्धेतूनां च ये किल । विघ्ननिह्नव-पैशून्या-शातनाघातमत्सराः ॥६३॥ ते ज्ञानदर्शनावार-कर्महेतव आस्रवाः । देवपूजा गुरूपास्तिः, पात्रदानं दया क्षमा ॥६४॥ सरागसंयमो देश-संयमोऽकामनिर्जरा । शौचं बालतपश्चेति, सद्वेद्यस्य स्युराश्रवाः ॥६५॥ दुःखशोकवधास्तापा-क्रन्दने परिदेवनम् । स्वान्योभयस्थाः स्युरस-द्वेद्यस्यामी इहाश्रवाः ॥६६॥ वीतरागे श्रुते सङ्घे, धर्मे संघगुणेषु (सर्वसुरेषु) च । अवर्णवादिता तीव्र-मिथ्यात्वपरिणामिता ॥६७॥सर्वज्ञसिद्धिदेवाप-ह्नवो धार्मिकदूषणम्।उन्मार्गदेशनानर्था-ग्रहोऽसंयतपूजनम्॥६८॥असमीक्षितकारित्वं, गुर्वादिष्ववमानना । इत्यादयो दृष्टिमोह-स्याश्रवाः परिकीर्तिताः ॥ ६९ ॥ कषायोदयतस्तीव्रपरिणामोऽयमात्मनः । चारित्रमोहनीयस्य, स आश्रव उदीरितः ॥७०॥ उत्प्रासनं सकन्दर्पो-पहासो हासशीलता । बहुप्रलापो दैन्योक्ति-र्हास्यस्यामी स्युराश्रवाः ॥ ७१ ॥ देशादिदर्शनौत्सुक्यं, चित्रे

---

८ પ્રકારનું છે ( ૬૨ ) જ્ઞાનનો અને દર્શનનો, જ્ઞાનીનો અને દર્શનીનો, જ્ઞાનહેતુ તથા દર્શનહેતુનો (એ ત્રણે યુગ્મનો) અન્તરાય, અપલાપ, પૈશુન્ય, આશાતના, ઘાત અને ઇર્ષ્યા કરવી તે **જ્ઞાનાવરણ-દર્શનાવરણ કર્મના** કારણરૂપ આશ્રવ છે. તથા દેવપૂજા, ગુરૂભક્તિ, પાત્રદાન, દયા, ક્ષમા, સરાગસંયમ દેશવિરતિ, અકામનિર્જરા, શૌચ, બાલતપ. ( એ સર્વ ) **શાતાવેદનીયના** આશ્રવો છે. (૬૩-૬૪-૬૫) દુ ખ, શોક, વધ, તાપ, (સંતાપ) આક્રંદ, વિલાપ એ સર્વ સ્વસ્થ અન્યસ્થ અને ઉભયસ્થ (એમ ૩ પ્રકારમાંથી યથાયોગ્ય પ્રકારવાળા) અહિં **અશાતાવેદનીયના** આશ્રવો છે. (૬૬) વીતરાગ, શ્રુત, સંઘ ધર્મ, અને સંઘના ગુણોમાં (સર્વ દેવોનું) અવર્ણવાદપણું, તીવ્ર મિથ્યાત્વપરિણામપણું, સર્વજ્ઞ મોક્ષ અને દેવનો અપલાપ, ધાર્મિકદૂષણ, ઉન્માર્ગપ્રરૂપણા અનર્થનો આગ્રહ, અસંયતની પૂજા, અવિચાર્યું કાર્ય, ગુરૂવિગેરેનું અપમાન, ઇત્યાદિ **દર્શનમોહનીયના** આશ્રવો કહ્યા છે. (૬૭-૬૮-૬૯) કષાયના ઉદયથી થયેલો આત્માનો જે તીવ્ર અધ્યવસાય તે **ચારિત્રમોહનીયનો** આશ્રવ કહેલો છે ( ૭૦ ) ઉત્પ્રાસન કામસહિત અધિક ઉપહાસ્ય, હસવું, અતિ વ્યર્થ -નું અને દીનવચન એ **હાસ્યમોહનીયના** આશ્રવો છે ( ૭૧ ) દેશ વિગે

रमणखेलने । परचित्तावर्जनं चे-त्याश्रवाः कीर्त्तिता रतेः ॥७२॥ असूया पापशीलत्वं, परेषां रतिनाशनम् । अकुशलप्रोत्साहनं, चारतेराश्रवा अमी ॥७३॥ स्वयं भयपरीणामः, परेषामथ भापनम् । त्रासनं निर्दयत्वं च, भयं प्रत्याश्रवा अमी ॥ ७४ ॥ परशोकाविष्करणं, स्वशोकोत्पादशोचने । रोदनादिप्रसक्तिश्च, शोकस्यैते स्युराश्रवाः ॥ ७५ ॥ चतुर्वर्णस्य सङ्घस्य, परिवादजुगुप्सने । सदाचारजुगुप्सा च, जुगुप्साया: स्युराश्रवाः ॥ ७६ ॥ ईर्ष्याविषयगार्द्ध्ये च, मृषावादोऽतिवक्रता । परदाररतासक्तिः, स्त्रीवेदस्याश्रवा इमे ॥७७॥ स्वदारमात्रसंतोषो-ऽनर्ष्या मन्दकषायता।अवक्राचारशीलत्वं,पुंवेदस्याश्रवा इति ॥ ७८ ॥ स्त्रीपुंसानङ्गसेवोग्राः, कषायास्तीव्रकामता । पाखण्डस्त्रीव्रतभ्रंशः, पंढवेदाश्रवा अमी ॥ ७९ ॥ साधूनां गर्हणा धर्मो-न्मु-

વાની ઉત્સુકતા, ચિત્ર અને કામક્રીડામાં પરના મનનુ આકર્ષણ કરવુ એ રતિમોહનીયના આશ્રવો કહ્યા છે. ( ૭૨ ) ઇર્ષ્યા, પાપાચાર, પરના પ્રમોદભાવનો વિનાશ અને અશુભ કાર્યમાં ઉત્સાહ એ અરતિમોહના આશ્રવો છે. ( ૭૩ ) પોતાનો ભય પરિણામ (પોતે ભય પામવો) બીજાને ભય પમાડવો, ત્રાસ આપવો અને નિર્દયપણુ એ ભયમોહના આશ્રવો છે. ( ૭૪ ) બીજાને શોક પ્રગટ કરવો, પોતાને દુઃખ ઉત્પન્ન કરવું, ચિંતા કરવી, અને રુદન વિગેરેમા આસક્તિ એ સર્વે શોક મોહનીયના આશ્રવો છે. ( ૭૫ ) ચતુર્વર્ણી સંઘની નિંદા જુગુપ્સા કરવી અને સદાચારની જુગુપ્સા કરવી એ જુગુપ્સામોહના આશ્રવો છે. (૭૬) ઈર્ષ્યા, વિષયાસક્તિ, મૃષાવાદ, અતિવક્રતા, અને પરદારગમનાસક્તિ. એ સ્રીવેદના આશ્રવો છે. ( ૭૭ ) સ્વદારામાંજ સંતોષ રાખવો, ઇર્ષ્યા ન કરવી, મંદકષાયપણુ અને અવક્રાચારીપણું એ પુરૂષવેદના આશ્રવો છે. ( ૭૮ ) સ્રી અને પુરુષ સાથે કામક્રીડા કરવી, ઉગ્રકષાય, તીવ્ર વિષયાભિલાષ, પાખંડ, અને સ્રીવ્રતનો ( શીયળ વ્રતનો ) ભંગ કરવો એ નપુંસક વેદના આશ્રવો છે. ( ૭૯ ) સાધુઓની નિંદા, ધર્મસન્મુખ થયેલાને વિઘ્ન કરવુ, મધુ માંસના અવિરતિઓને અવિરતિ (કાયમ રહે તેવી રીતે) વર્ણન કરવુ, દેશવિરતને વારંવાર અન્તરાય કરવા, અવિરતિનુ ગુણવર્ણન કરવુ, ચારિત્રદૂષણ, તથા બીજા જીવોમાં રહેલા કષાય નોકષાયોને ઉદ્દીપન કરવા એ સર્વે સામાન્યથી ચારિત્રમોહનીયના આશ્રવો

खानां विघ्नकारिता। मधुमांसाविरताना–मविरत्यभिवर्णनम्॥ ८० ॥ विरताविरतानां चा–न्तरायकरणं मुहुः। अचारित्रगुणाख्यानं, तथा चारित्रदूषणम्॥ ८१ ॥ कषायनोकषायाणा–मन्यस्थानामुदीरणम्। चारित्रमोहनीयस्य, सामान्येनाश्रवा अमी॥८२॥ पञ्चेन्द्रियप्राणिवधो, बह्वारम्भपरिग्रहौ। निरनुग्रहता मांस–भोजनं स्थिरवैरता॥८३॥ रौद्रध्यानं मिथ्यात्वान–न्तानुबन्धिकषायते। कृष्णनीलकपोताश्च, लेश्या अनृतभाषणम॥ ८४ ॥ परद्रव्यापहरणं, मुहुर्मैथुनसेवनम्। अवशेन्द्रियता चेति, नरकायुष आश्रवाः॥८५॥ उन्मार्गदेशना मार्ग–प्रणाशो गूढचित्तता। आर्त्तध्यानं सशल्यत्वं, मायारम्भपरिग्रहौ॥ ८६ ॥ शीलव्रते सातिचारे, नीलकापोतलेश्यता। अप्रत्याख्यानकषाया–स्तिर्यगायुष आश्रवाः॥ ८७ ॥ अल्पौ परिग्रहारम्भौ, सहजे मार्दवार्जवे। कापोतपीतलेश्यत्वं, धर्मध्यानानुरागिता॥ ८८॥ प्रत्याख्यानकषायत्वं, परिणामश्च मध्यमः। संविभागविधायित्वं, देवतागुरुपूजनम्॥ ८९ ॥ पूर्वालापप्रियालापौ, सुखप्रज्ञापनीयता। लोकयात्रासु माध्यस्थ्यं, मानुषायुष आश्रवाः॥९०॥ सरागसंयमो देश–संयमोऽका-

---

છે. ( ૮૦–૮૧–૮૨ ) પચેન્દ્રિય જીવનો વધ કરવો, બહુ આરંભ, બહુ પરિગ્રહ, અનુગ્રહ રહિતપણું ( નિર્દયતા ), માંસ ભોજન, સ્થિરવૈર, રૌદ્રધ્યાન, મિથ્યાત્વ, અનંતાનુબંધિકષાય, કૃષ્ણ નીલ કાપોત લેશ્યા, અસત્યભાષણ, પર દ્રવ્યનું હરણ, વારંવાર મૈથુન સેવન, ઇન્દ્રિયોનું અવશપણું, એ સર્વ **નરકાયુષ્યના** આશ્રવો છે. ( ૮૩–૮૪–૮૫ ) ઉન્માર્ગનો ઉપદેશ, સન્માર્ગનો વિનાશ, ગૂઢ હૃદય આર્ત્તધ્યાન, સશલ્યપણું, માયા, આરંભપરિગ્રહ, અતિચારવાળું શીયળ અને ( અહિંસાદિ ) વ્રતો, નીલ અને કાપોત લેશ્યા, અને અપ્રત્યાખ્યાની કષાયો એ **તિર્યંચાયુષ્યના** આશ્રવો છે. ( ૮૬–૮૭ ) અલ્પ પરિગ્રહ, અલ્પ આરંભ, સ્વભાવથીજ નિર્મળતા અને ઋજુતા, કાપોત લેશ્યા, પીતલેશ્યા, ધર્મધ્યાનનો અનુરાગ, પ્રત્યાખ્યાની કષાય, મધ્યમ અધ્યવસાય, સંવિભાગકરણ, ( દાન ) દેવગુરુનું પૂજન, પૂર્વાલાપ, પ્રિયાલાપ, વિચારવું–સુખનો માર્ગ જણાવવો, **અને લોકયાત્રામાં ( લૌકિકરૂઢિમાં )** મધ્યસ્થતા એ **મનુષ્યાયુષ્યના** આશ્રવો છે. ( ૮૮–૮૯–૯૦ ) સરાગ

मनिर्जरा । [1]कल्याणमित्रसंपर्को, धर्मश्रवणशीलता ॥९१॥ पात्रे दानं तपः श्रद्धा, रत्नत्रयाविराधना । मृत्युकाले परीणामो, लेश्ययोः पद्मपीतयोः ॥९२॥ बालतपोऽग्नितोयादि–साधनोल्लम्बनानि च । अव्यक्तसामायिकता, देवस्यायुष आश्रवाः ॥ ९३ ॥ मनोवाक्कायवक्रत्वं, परेषां विप्रतारणम् । मायाप्रयोगो मिथ्यात्वं, पैशून्यं चलचित्तता ॥९४॥ सुवर्णादिप्रतिच्छन्द–करणं कूटसाक्षिता । वर्णगन्धरसस्पर्शान्यथापादनानि च ॥ ९५ ॥ अङ्गोपाङ्गच्यावनानि, यन्त्रपञ्जरकर्म च । कूटमानतुलाकर्मा–न्यनिन्दात्मप्रशंसनम् ॥९६॥ हिंसानृतस्तेयाब्रह्म–महारम्भपरिग्रहाः परुषासभ्यवचनं, शुचिवेषादिना मदः॥९७॥ मौखर्याक्रोशौ सौभाग्यो–पघातः कार्मणक्रिया । परकौतूहलोत्पादः, परिहासविडम्बनैः ॥९८॥ वेश्यादीनामलङ्कार–दानं दावाग्निदीपनम् ।

સંયમ, દેશવિરતિ, અકામનિર્જરા, કલ્યાણકારી મિત્રનો સંબંધ, ધર્મશ્રવણ, પાત્રમાં દાન, તપ, શ્રદ્ધા, રત્નત્રયીની અવિરાધના, મૃત્યુ વખતે પદ્મ અને પીત લેશ્યાનો પરિણામ, અજ્ઞાન તપ, અગ્નિમરણ, જલમરણ વિગેરે (શુભ ભાવે આપઘાત વા અકાળ મરણ), ઉલ્લંઘન (ફાંસો). અને અવ્યક્ત સામાયિક એ દેવાયુષ્યના આશ્રવો છે. (૯૧-૯૨-૯૩) મન વચન કાયાનું વક્રપણું, બીજાને ઠગવું, માયા પ્રયોગ. મિથ્યાત્વ. પૈશુન્ય, ચળચિત્ત સુવર્ણાદિકનું પ્રતિચ્છંદ કરણ (પરને ઠગવા નકલી સુવર્ણાદિ બનાવવા). ખોટી સાક્ષી, વર્ણ ગંધ રસ સ્પર્શને અન્યથા કરવા (ઠગવાદિ માટે વર્ણાદિ બદલી દેવા) અંગોપાંગ ગળાવવાં યંત્રકર્મ, પિંજરકર્મ, ખોટાં માપ, ખોટું તોલ ખોટી ક્રિયા, અન્યનિંદા, આત્મપ્રશંસા, હિંસા, અસત્ય, ચોરી, અબ્રહ્મ મહારંભ, મહાપરિગ્રહ, કઠોર અસભ્ય વચન, પવિત્રવેષાદિ વડે મદ કરવો, વાચાળતા, આક્રોશ, સૌભાગ્યનો ઉપઘાત, કામણક્રિયા, પરને કુતૂહલ ઉપજાવવું, દુઃખકર્ષિ હસવું, વેશ્યાદિકને અલંકાર આપવા, દાવાગ્નિ સળગાવવો, દેવપૂજાદિકના બહાને ગંધા-

[1] અનેક જાતિના કષ્ટ પામું ઉપાય કરી સંસાર રૂપ કેદખાનામાં ગોંધાયેલા આત્માને ધર્મમાં પ્રેરણા કરે તે કલ્યાણમિત્ર. "चोएइ नणु जो धम्मं, निबिडेन नेहेण नणु। संसारचारगगयं, सो नणु कल्लाणमित्तोत्ति॥१॥"

देवादिव्याजाद्गन्धादि–चौर्यं तीव्रकषायता॥९९॥चैत्यप्रतिश्रयाराम–प्रतिमानां विनाशनम्। अङ्गारादिक्रिया चैवा–शुभस्य नाम्न आश्रवाः ॥१००॥एत एवान्यथारूपा–स्तथा संसारभीरुता। प्रमादहानं सद्भावा–र्पणं क्षान्त्यादयोऽपि च॥१०१॥दर्शने धार्मिकाणां च, सम्भ्रमः स्वागतक्रिया। आश्रवाः शुभनाम्नोऽथ तीर्थकृन्नाम्न आश्रवाः ॥१०२॥ भक्तिरर्हत्सु सिद्धेषु, गुरुषु स्थविरेषु च। बहुश्रुतेषु गच्छे च, श्रुतज्ञाने तपस्विषु॥१०३॥ आवश्यके व्रतशीले–ष्वप्रमादो विनीतता। ज्ञानाभ्यासस्तपस्त्यागौ, मुहुर्ध्यानं प्रभावना॥१०४॥सङ्घे समाधिजननं, वैयावृत्त्यं च साधुषु। अपूर्वज्ञानग्रहणं, विशुद्धिर्दर्शनस्य च ॥१०५॥ आद्यन्ततीर्थनाथाभ्या–मेते विंशतिराश्रवाः। एको द्वौ वा त्रयः सर्वे, वान्यैः स्पृष्टा जिनेश्वरैः॥१०६॥ परस्य निन्दावज्ञोप–हासाः सद्गुण–लोपनम्। सदसद्दोषकथन–मात्मनस्तु प्रशंसनम्॥१०७॥ सदसद्गुण–

---

दिक ચોરવા, તીવ્રકષાય, ચૈત્ય સબંધિ આરામ અને પ્રતિમાઓનો વિનાશ કરવો, અને અંગાર કર્માદિ વ્યાપાર, એ સર્વ અશુભ નામના (નામ કર્મની અશુભ પ્રકૃતિના) આશ્રવો છે (૯૪ થી ૧૦૦) પૂર્વે કહેલા (અશુભ નામના) આશ્રવોથી વિપરીત ભાવો તથા સંસારભીરૂતા, પ્રમાદનો વિનાશ, સદ્ભાવાર્પણ (સદ્ભાવ=સત્યભાવ જણાવવો) અને ક્ષમા વિગેરે પણ, સાધર્મિકોને દેખતા જ સંભ્રમ (ઔત્સુક્ય) થવો, તેઓની સ્વાગતક્રિયા કરવી એ શુભ નામના (નામ કર્મની શુભ પ્રકૃતિઓના) આશ્રવો છે. હવે તીર્થંકર નામ કર્મના આશ્રવ (કહેવાય છે). (૧૦૧–૧૦૨) અરિહંત, સિદ્ધ, ગુરૂ, સ્થવિર, બહુશ્રુત, ગચ્છ, શ્રુતજ્ઞાન, અને તપસ્વીઓમા ભક્તિ, આવશ્યકમાં અને વ્રત શીલ વિગેરેમા અપ્રમાદ, વિનીતપણુ, જ્ઞાનાભ્યાસ, તપ, ત્યાગ, વારંવાર ધ્યાન, પ્રભાવના, સંઘમા સમાધિ કરવી, સાધુઓનુ વૈયાવૃત્ય કરવુ, અપૂર્વ જ્ઞાન ગ્રહણ, સમ્યક્ત્વની વિશુદ્ધિ, એ ૨૦ આશ્રવો (સ્થાનો) પહેલા અને છેલ્લા તીર્થંકરે સ્પર્શેલા છે, અને અન્ય જીનેશ્વરોએ (એ વીસમાથી કોઈ પણ) એક બે ત્રણ વા સર્વ આશ્રવો સ્પર્શ્યા છે (૧૦૩થી ૧૦૬) પરની નિંદા, અવજ્ઞા, હાસ્ય, છતા ગુણનું ઢાંકવુ, છતા અછતા દોષ કહેવા, આત્મપ્રશંસા કરવી, પોતાના છતા અછતા ગુણની પ્રશંસા કરવી, પોતાના દોષ ઢાંકવા

शंसा च, स्वदोषाच्छादनं तथा। जात्यादिभिर्मदश्चेति, नीचैर्गोत्राश्रवा अमी ॥१०८॥ नीचैर्गोत्राश्रवविप–र्यासो विगतगर्वता। वाक्कायचित्तैर्विनय, उच्चैर्गोत्राश्रवा अमी ॥१०९॥ दाने लाभे च वीर्ये च, तथा भोगोपभोगयोः। सव्याजाव्याजविघ्नोऽन्त–रायकर्मण आश्रवाः॥११०॥

( इत्याश्रवतत्त्वम् ३ )

सर्वेषामाश्रवाणां यो, रोधहेतुः स संवरः। ( सर्वेषामाश्रवाणां तु, निरोधः संवरः स्मृतः ) स पुनर्भिद्यते द्वेधा, द्रव्यभावविभेदतः ॥ १११ ॥ यः कर्मपुद्गलादान–च्छेदः स द्रव्यसंवरः। भवहेतुक्रियात्यागः, स पुनर्भावसंवरः ॥ ११२ ॥ येन येन ह्युपायेन, रुध्यते यो य आश्रवः। तस्य तस्य निरोधाय, स स योज्यो मनीषिभिः॥११३॥ क्षमया मृदुभावेन, ऋजुत्वेनाप्यनीहया। क्रोधं मानं तथा मायां, लोभं रुन्ध्याद्यथाक्रमम्॥११४॥ असंयमकृतोत्सेकान्, विषयान् विषसन्निभान्। निराकुर्यादखण्डेन, संयमेन महामतिः॥११५॥ तिसृभिर्गुप्तिभिर्योगान्, प्रमादं चाप्रमादतः।

---

અને જાતિમદ વિગેરે આઠ પ્રકારનો મદ કરવો એ નીચગોત્રના આશ્રવો છે. (૧૦૭–૧૦૮) નીચગોત્રના આશ્રવોથી વિપરીત આશ્રવો, ગર્વરહિતપણું. મન વચન કાયાવડે વિનય. એ ઉચ્ચગોત્રના આશ્રવો છે. (૧૦૯) દાન લાભ વીર્ય ભોગ અને ઉપભોગમાં બહાના સહિત કે બહાના વિના જે અન્તરાય કરવો તે અન્તરાય કર્મના આશ્રવો છે.(૧૧૦) ॥ઇતિ આશ્રવતત્ત્વમ્ ૩॥)

જે સર્વ આશ્રવોને રોકવામાં કારણરૂપ હોય તે સંવર, તે પુનઃ દ્રવ્ય અને ભાવના ભેદથી (દ્રવ્ય સંવર અને ભાવ સંવર એમ) બે પ્રકારનો છે. (૧૧૧) જે કર્મ પુદ્ગલના ગ્રહણનો ઉચ્છેદ કરવો તે દ્રવ્ય સંવર. અને સંસારહેતુક ક્રિયાઓનો ત્યાગ તે ભાવસંવર છે. (૧૧૨) જે જે ઉપાય વડે જે જે આશ્રવ રોકાય તે તે આશ્રવના નિરોધ માટે તે તે ઉપાય બુદ્ધિમાનોએ યોજવો. (૧૧૩) ઘા અનુક્રમે ક્ષમાવડે ક્રોધને નમ્રતાવડે માનને. સરળતાવડે માયાને, અને નિઃસ્પૃહતાવડે લોભને રોકવો (૧૧૪) વળી મહાબુદ્ધિમાન્ પુરુષ અસંયમવડે પેદા થયેલા વિષસરખા ઉત્કૃષ્ટ વિષયોને અખંડ સંયમ વડે વિનાશ પમાડે [illegible] ) (૧૧૫) ત્રણ ગુપ્તિવડે ત્રણયોગને, અપ્રમાદથી પ્રમાદને

सावद्ययोगहानेन, विरतिं चापि साधयेत्॥११६॥सद्दर्शनेन मिथ्यात्वं, शुभस्थैर्येण चेतसः। विजयेतार्त्तरौद्रे च, संवरार्थं कृतोद्यमः॥११७॥ यथा चतुष्पथस्थस्य, बहुद्वारस्य वेश्मनः। अनावृतेषु द्वारेषु, रजः प्रविशति ध्रुवम् ॥११८॥ प्रविष्टं स्नेहयोगाच्च, तन्मयत्वेन बध्यते। न विशेन्न च बध्येत, द्वारेषु स्थगितेषु च ॥११९॥ यथा वा सरसि क्वापि, सर्वैर्द्वारैर्विशेज्जलम्। तेषु तु प्रतिरुद्धेषु, प्रविशेन्न मनागपि ॥१२०॥ यथा वा यानपात्रस्य, मध्ये रन्ध्रैर्विशेज्जलम्। कृते रन्ध्रपिधाने तु, न स्तोकमपि तद्विशेत् ॥१२१॥ योगादिष्वाश्रवद्वारे-ष्वेवं रुद्धेषु सर्वतः। कर्मद्रव्यप्रवेशो न, जीवे संवरशालिनि ॥१२२॥ संवरादाश्रवद्वार-निरोधः संवरः पुनः। क्षान्त्यादिभेदाद्बहुधा, तथैव प्रतिपादितः ॥१२३॥ गुणस्थानेषु यो यः स्या-त्संवरः स स उच्यते। मिथ्यात्वानुदयात्पर-स्थेषु मिथ्यात्वसंवरः ॥१२४॥ तथा देशविरत्यादौ, स्यादविरतिसंवरः। अप्रमत्तसंयतादौ, प्रमादसंवरो मतः ॥१२५॥ प्रशान्तक्षीणमो-

---

રોકવા, અને સાવદ્ય યોગના ત્યાગવડે વિરતિ પણ ગ્રહણ કરે। (૧૧૬) સદ્દર્શન વડે મિથ્યાત્વને જીતે અને સંવર માટે કરેલ ઉદ્યમવાળો જીવ મનની શુભ સ્થિરતાવડે આર્ત્તરૌદ્રધ્યાનને જીતે (૧૧૭) જેમ ચઉટામા રહેલા ઘણા દ્વારવાળા ઘરનાં દ્વારો બંધ નહિ કરવાથી ધૂળ અવશ્ય પ્રવેશ કરે છે, અને પ્રવેશેલી ધૂળ ચીકાશના યોગથી તન્મયપણે બંધાઇ (ચોંટી) જાય છે, અને દ્વારો ઢાંકવાથી ધૂળ પ્રવેશ કરતી નથી તેમ ચોંટીજતી પણ નથી. (૧૧૮-૧૧૯) અથવા જેમ કોઈ તળાવમાં સર્વ દ્વારોએ જળ પ્રવેશ કરે, અને તે દ્વારો બંધકરવાથી ( જળ ) લગારમાત્ર પણ પ્રવેશ કરે નહિં (૧૨૦) અથવા જે વહાણમા છીદ્રોદ્વારા જળ પ્રવેશ કરે, અને છીદ્રો પુરી દીધાથી જળ લગાર પણ પ્રવેશ ન કરે (૧૨૧) તેમ યોગ વિગેરે આશ્રવદ્વારો સર્વબાજુએ રોકયાથી સંવરવાળા જીવમાં કર્મદ્રવ્યનો પ્રવેશ ન હોય (૧૨૨) સંવરથી આશ્રવદ્વારોનો નિરોધ થાય છે, તેમજ વળી સંવર ક્ષમાદિભેદે ઘણા પ્રકારનો કહેલો છે (૧૨૩) જે ગુણ સ્થાનોમા જે જે સંવર થાય છે તે કહેવાય છે. મિથ્યાત્વનો ઉદય નહિ હોવાથી બીજાં ( સાસ્વાદનાદિ ) ગુણસ્થાનોમા મિથ્યાત્વ સંવર છે. (૧૨૪) તથા દેશવિરતિ વિગેરેમા અવિરતિ સંવર છે. અપ્રમત્તાદિકમાં પ્રમાદ સંવર કહ્યો છે. (૧૨૫) ઉપશાન્તમોહ અને ક્ષીણ-

द्यादौ, भवेत् कषायसंवरः । अयोग्याख्यकेवलिनि, सम्पूर्णो योगसंवरः ॥ १२६ ॥ ( इतिसंवरतत्त्वम् ४ )

कर्मणां भवहेतूनां, जरणादिह निर्जरा । ( संसारबीजभूतानां, कर्मणां जरणादिह । ) निर्जरा सा स्मृता द्वेधा, सकामा कामवर्जिता ॥ १२७ ॥ ज्ञेया सकामा यमिना—मकामा त्वन्यदेहिनाम । कर्मणां फलवत् पाको, यदुपायात् स्वतोऽपि च ॥ १२८ ॥ सदोषमपि दीप्तेन, सुवर्णं वह्निना यथा तपोऽग्निना तप्यमान—स्तथा जीवो विशुध्यति ॥ १२९ ॥ अनशनमौनोदर्यं, वृत्तेः सङ्क्षेपणं तथा । रसत्यागस्तनुक्लेशो, लीनतेति बहिस्तपः ॥१३०॥ प्रायश्चित्तं वैयावृत्त्यं, स्वाध्यायो विनयोऽपि च । व्युत्सर्गोऽथ शुभध्यानं, षोढेत्याभ्यन्तरं तपः ॥१३१॥ दीप्यमाने तपोवह्नौ, बाह्ये चाभ्यन्तरेऽपि च । यमी जरति कर्माणि दुर्जराण्यपि तत्क्षणात् ॥ १३२ ॥ ( इति निर्जरातत्त्वम् ५ )

---

બાદર વિગેરેમાં કષાયસંવર છે. અને અયોગીકેવલીમાં સંપૂર્ણ યોગસંવર (સર્વસંવર) છે (૧૨૬) (ઇતિ સંવરતત્ત્વમ્ ૪)

સંસારના બીજભૂત કર્મોને નિર્જરવાથી (ખેરવવાથી) અહિં નિર્જરા કહેવાય છે તે સકામ અને અકામ એમ બે પ્રકારની છે (૧૨૭) ત્યાં યમવાળાઓને (યમ નિયમવાળા) ને સકામ, અને બીજા જીવોને અકામ નિર્જરા છે. કારણ કે ફળની માફક કર્મનો પાક પણ ઉપાયથી અને સ્વતઃ (વિના ઉપાયે) પણ થાય છે (૧૨૮) જેમ પ્રદીપ્ત થયેલા અગ્નિવડે દોષવાળું સુવર્ણ (શુદ્ધ થાય), તેમ તપરૂપ અગ્નિવડે તપતો જીવ શુદ્ધ થાય છે (૧૨૯) અનશન, ઉણોદરતા, વૃત્તિસંક્ષેપ, રસત્યાગ, કાયક્લેશ અને સંલીનતા એ ૬ બાહ્યતપ છે. (૧૩૦) પ્રાયશ્ચિત્ત, વૈયાવચ્ચ, સ્વાધ્યાય, વિનય, વ્યુત્સર્ગ, અને શુભધ્યાન, એ ૬ પ્રકારનો અભ્યન્તર તપ છે (૧૩૧) બાહ્ય અને અભ્યન્તર તપરૂપ અગ્નિ પ્રજ્વલિત થતાં મુનિ દુર્જર કર્મોને પણ શીઘ્ર નિર્જરે છે (૧૩૨) (ઇતિ નિર્જરાતત્ત્વમ્ ૫)

सकषायतया जीवः, कर्मयोग्यांस्तु पुद्गलान् । यदादत्ते स बन्धः स्या-ज्जीवास्वातन्त्र्यकारणम् ॥ १३३ ॥ प्रकृतिस्थित्यनुभाव-प्रदेशा विधयोऽस्य तु।प्रकृतिस्तु स्वभावः स्या-ज्ज्ञानावृत्यादिरष्टधा॥१३४॥ ज्ञानदृष्ट्यावृती वेद्यं, मोहनीयायुषी अपि । नामगोत्रान्तरायाश्च, मूल-प्रकृतयो मताः ॥ १३५ ॥ निकर्षोत्कर्षतः काल-नियमः कर्मणां स्थितिः । अनुभावो विपाकः स्यात्, प्रदेशोंऽशप्रकल्पनम् ॥१३६॥ मिथ्यादृष्टिरविरति-प्रमादौ च क्रुधादयः। योगेन सह पञ्चैते, विज्ञेया बन्धहेतवः ॥ १३७ ॥ ( इति बन्धतत्त्वम् ६ )

अभावे बन्धहेतूनां, घातिकर्मक्षयोद्भवे। केवले सति मोक्षः स्या-च्छेषाणां कर्मणां जये ॥ १३८ ॥ सुरासुरनरेन्द्राणां यत् सुखं भुवन-त्रये । स स्यादनन्तभागोऽपि, न मोक्षसुखसम्पदः ॥१३०॥ स्वस्व-

---

જીવ સકષાયપણે કર્મયોગ્ય પુદ્‌ગલોને જે ગ્રહણ કરે તે જીવના અસ્વતંત્રપણાના કારણરૂપ બંધ કહેલો છે. ( ૧૩૩ ) એના ( બંધના ) **પ્રકૃતિ બંધ, સ્થિતિ બન્ધ, અનુભાવ બન્ધ** અને **પ્રદેશ બન્ધ** એ ચાર પ્રકાર છે, ત્યાં **પ્રકૃતિ** એટલે જ્ઞાનાવરણાદિ આઠ પ્રકારનો સ્વભાવ છે ( ૧૩૪ ) જ્ઞાનાવરણ, દર્શનાવરણ, વેદનીય, મોહનીય, આયુષ્ય નામ, ગોત્ર અને અન્તરાય એ આઠ મૂળપ્રકૃતિઓ કહેલી છે ( ૧૩૫ ) કર્મોનો જઘન્ય કે ઉત્કૃષ્ટ કાળ નિયમ તે **સ્થિતિ, અનુભાવ** તે વિપાક અને **પ્રદેશ** તે અંશની પ્રકલ્પના ( કર્માણુઓનો સમુદાય ) છે. ( ૧૩૬ ) મિથ્યાદૃષ્ટિ (મિથ્યાત્વ), અવિરતિ, પ્રમાદ, ક્રોધાદિ કષાય, યોગ સહિત એ પાચ કર્મબંધનાહેતુ જાણવા (૧૩૭) ઇતિ બન્ધતત્ત્વમ્ ૬.

બધહેતુઓનો અભાવ થયે અને ઘાતી કર્મના ક્ષયથી કેવળજ્ઞાન ઉત્પન્ન થયે ( ત્યારબાદ ) શેષ કર્મોનો ક્ષય ( જય ) થયે મોક્ષ હોય છે (૧૩૮) ત્રણ ભુવનમા દેવદાનવ અને રાજાઓને જે સુખ છે. તે મોક્ષસુખ-રૂ પત્તિનો અનંતમો ભાગ પણ નથી (૧૩૯) જે કારણથી મોક્ષમાં સ્વસ્વભા-

